माणिकचन्द्र-दिगम्बर-जैन-ग्रन्थमालायाः
पञ्चविंशतितमो ग्रन्थः ।

श्रीमदमितगत्याचार्यप्रणीतः ।

# पंचसंग्रहः ।



साहित्यरत्न-पण्डित-दरबारीलालन्यायतीर्थेण
संशोधितः ।



प्रकाशिका—
श्रीमाणिकचन्द्रदिगम्बरजैनग्रन्थमालासमितिः ।



आश्विन, वीरनिर्वाण सं० २४५२ ।

प्रथमावृत्तिः ] *** [ अक्टूम्बर १९२७

मूल्यं त्रयोदशाणकाः ।

# विषयसूची ।




| विषयाः । | पृष्ठसंख्या । |
|---|---|
| **प्रथमः परिच्छेदः ।** | |
| सामान्यजीवसंख्या | १ |
| गुणस्थानानाम् स्वरूपम् | २ |
| गुणस्थानेषु जीवसंख्या | ८ |
| जीवसमासप्ररूपणा | १३ |
| प्राणप्ररूपणा | १९ |
| पर्याप्तिप्ररूपणा | १९ |
| मार्गणाप्ररूपणा | १९ |
| गतिमार्गणा | २० |
| इन्द्रियमार्गणा | २१ |
| कायमार्गणा | २१ |
| योगमार्गणा | २३ |
| वेदमार्गणा | २५ |
| कषायमार्गणा | २६ |
| ज्ञानमार्गणा | २७ |
| संयममार्गणा | ३० |
| दर्शनमार्गणा | ३१ |
| लेश्यामार्गणा | ३२ |
| भव्यमार्गणा | ३६ |
| सम्यक्त्वमार्गणा | ३६ |
| संज्ञामार्गणा | ४४ |
| आहारमार्गणा | ४५ |
| उपयोगप्ररूपणा | ४५ |

| विषयाः । | पृष्ठसंख्या । |
|---|---|
| **द्वितीयः परिच्छेदः ।** | |
| प्रकृतिस्तवः | ४८ |
| **तृतीयः परिच्छेदः ।** | |
| कर्मप्रकृतिबन्धस्तवः | ५३ |
| बन्धादिनिरूपणम् | ५४ |
| गुणस्थानेषूत्तरप्रकृतिबन्धः | ५६ |
| गुणस्थानेषूत्तरप्रकृत्युदयः | ५९ |
| गुणस्थानेषूत्तरप्रकृतिसत्वम् | ६३ |
| प्रश्नचूलिका | ६७ |
| **चतुर्थः परिच्छेदः ।** | |
| मार्गणासु जीवसमासाः | ७३ |
| मार्गणासु गुणस्थानानि | ७५ |
| मार्गणासूपयोगाः | ७७ |
| मार्गणासु योगाः | ७९ |
| जीवसमासेषूपयोगाः | ८१ |
| जीवस्थानेषु योगाः | ८१ |
| गुणस्थानेषूपयोगाः | ८२ |
| गुणस्थानेषु योगाः | ८२ |
| बन्धप्रत्ययाः | ८३ |
| मार्गणायाम् बन्धप्रत्ययाः | ८६ |
| गुणस्थानेषु बन्धप्रत्ययाः | ८८ |
| अष्टकर्मबन्धः | ११२ |
| बन्धोदयोदीरणाः | ११३ |

| विषयाः । | | पृष्टसंख्या । |
|---|---|---|
| स्थानबन्धः ( भुजाकारादयः ) | | ११७ |
| प्रकृतिबन्धः | | १२८ |
| स्थितिबन्धः | | १३० |
| अनुभागबन्धः | | १३९ |
| प्रदेशबन्धः | | १४६ |

पञ्चमः परिच्छेदः ।

| विषयाः । | | पृष्टसंख्या । |
|---|---|---|
| प्रकृतिस्थानानि | | १४९ |
| ज्ञानान्तराययोः बंधादित्रिभंगी | | १५० |
| दर्शनावरणस्य | ,, | १५१ |
| गोत्रस्य | ,, | १५२ |
| वेद्यस्य | ,, | १५३ |
| आयुषः | ,, | १५४ |
| मोहनीयस्य | ,, | १५५ |
| नामकर्मणः | ,, | १६१ |
| जीवस्थानेषु | ,, | १९० |
| गुणस्थानेषु | ,, | १९६ |
| ज्ञानावरणान्तराययोःस्थानभंगः | | १९६ |
| दर्शनावरणस्य | ,, | १९६ |
| वेदनीयस्य | ,, | १९७ |
| आयुषः | ,, | १९८ |
| गोत्रस्य | ,, | २०० |
| मोहनीयस्य | ,, | २०१ |
| ( योगगुणिताः ) | | २०६ |
| ( उपयोगगुणिताः ) | | २०९ |
| ( लेश्यागुणिताः ) | | २१० |
| ( वेदगुणिताः ) | | २११ |
| नामकर्मणः स्थानभंगाः | | २१५ |
| मार्गणायाम् बंधादित्रिभंगी | | २१८ |
| ग्रन्थकर्तुः प्रशस्तिः | | २३८ |

# अमितगतिः ।



विद्वच्छिरोमणिरयम्महानुभावः परमारवंशावतंश—महाराजमुञ्जस्यराज्येऽभूदिति तत्प्रशस्त्या ज्ञायते । महाराजमुञ्जः षट्त्रिंशदधिकसहस्राब्दपूर्वादष्टसप्तत्यधिकसहस्राब्दपर्यन्तं राज्यञ्चकार तथाहि—

विक्रमाद्वासरादष्ट मुनिव्योमेन्दुसंमिते ।
वर्षे मुञ्जपदे भोजभूपः पट्टे निवेशितः ॥

मुञ्जस्यराज्याभिषेकः कदा बभूवेति न ज्ञायते किन्तु तस्य षट्त्रिंशदधिक सहस्राब्दे लिखितमेकं दानपत्रं प्राप्तमस्ति तेन ज्ञायते यत्तत्पूर्वं तस्य राज्याभिषेको बभूव ।

महात्मनाऽमितगतिना पञ्चाशदधिकसहस्राब्दे ( १०५० ) सुभाषितरत्नसंदोहः रचितः । धर्मपरीक्षा च सप्तत्यधिकसहस्राब्दे ( १०७० ), पश्चाच्चायम्पञ्चसंग्रहः त्रिसप्तत्याधिकसहस्राब्दे ( १०७३ ) निर्मितः । तथाहि पञ्चसंग्रहप्रशस्तौ—

त्रिसप्तत्याधिकेब्दानां सहस्रे शकविद्विषः । ( विक्रमस्य )
मसूतिकापुरे जातमिदं शास्त्रम्मनोहरम् ॥

ग्रन्थरचना समयैरनुमीयते यत्कवेर्जन्म विक्रमस्यैकादश शताब्द्याः प्रथमपादान्तेऽभूत् ( १०२५ ) परन्त्विदं वक्तुं नशक्नोमि यत्कविः कदा स्वर्जगाम ।

ग्रन्थकारेण स्वप्रशस्तौ गुरुपरम्परादेरपिनिर्देशः कृतस्तेन ज्ञायते यदयम्महानुभावः माथुरसंघमलञ्चकार ।

दिगम्बरजैनसमाजेऽर्हद्वलिकृताः सिंहसंदिसेनदेवाख्याः चत्वारः संघाः आसन् । अमी चत्वारोऽपि मूलसंघस्यशाखास्वरूपाः बभूवुः । ज्ञायतेऽनेन यन्माथुरसंघोनास्ति मूलसंघशाखास्वरूपः, अतः जैनाभासेष्वन्वेषे । नीतिसारे गोपुच्छिकादयः ( काष्टासंघादयः ) पञ्चजैनाभासाः उक्ताः । तथाहि—

गोपुच्छिकः श्वेतवासा द्राविडो यापनीयकः ।
निःपिच्छश्चेति पञ्चैते जैनाभासाः प्रकीर्तिताः ॥ १० ॥

तत्र च काष्ठासंघापरनामधेये गोपुच्छके माथुरगच्छ आसीदिति सुरेन्द्रकीर्त्याचार्यनिर्मितपट्टावल्या ज्ञायते । तथाहि—

काष्ठासंघो भुवि ख्यातो जानन्ति नृसुरासुराः ।
तत्र गच्छाश्च चत्वारो राजन्ते विश्रुताः क्षितौ ॥ १ ॥
श्रीनन्दितटसंज्ञश्च माथुरो बागडाभिधः ।
लाडबागड इत्येते विख्याताः क्षितिमण्डले ॥

श्रीमदमितगतिः काष्ठासंघीय आसीदिति श्रीभूषणसूरिकृतप्रबोधचिन्तामणिग्रन्थेनापि ज्ञायते । तथाहि—

भानुभूवलये कम्रो काष्ठसंघाम्बरे रविः ।
अमितादिगतिः शुद्धः शब्दव्याकरणार्णवः ॥

न केवलमनेन काष्ठासंघीयत्वं ज्ञायते किन्तु महात्मनो वैयाकरणत्वमपि सूच्यते । अतोऽनुमीयते यद्व्याकरणविषयेऽपि तत्ख्यातिर्दिगन्तव्यापिनी बभूव ।

यद्यपि माथुरसंघः काष्ठासंघस्य गच्छ एव तथापि तस्मिन् किञ्चिद्विशेषत्वमप्यस्ति । अतएवानुमीयते यन्माथुरगच्छस्यनाम माथुरसंघ इत्यभूत् । दर्शनसारे माथुरसंघोत्पत्तिविषये गाथेयम्प्राप्यते ।

तत्तो दुसएतीदे महुराएमाहुराण गुरुणाहो ।
णामेण रामसेणो णिप्पिच्छियं वण्णियं तेण ॥ ४१ ॥

अनया माथुरसंघस्य काष्ठासंघात्स्वतन्त्रता निःपिच्छिकता च ज्ञायते । यद्यपि श्रीमदमितगतेः संघः जैनाभासेषु परिगणितस्तथापि नानेनाचार्यस्य महत्त्वहानिः । पुरा कैश्चिन्नाममात्रमतभेदेनाचारभेदेन वा सिद्धान्तामेदे सत्यपि जैनाभासतोद्घोषिताऽऽसीत् परन्तु शनैः शनैः सा प्रच्छन्नत्वमगात् । अत इदमुचितमेवोक्तम् ।

---

१ ततो द्विशतेऽतीते मथुरायाम्माथुराणां गुरुनाथः ।
नाम्ना रामसेनो निःपिच्छिकं वर्णितं तेन ॥

ताकज्जे लहु लग्गहु अप्पा झाएहु जो णिरालम्बो ।
अह कट्ठो अह मूलो संकप्पवियप्पयं मुयहं ॥
संघो कोवि ण तारइ कट्ठो मूलो तहेव णिप्पिच्छो ।
अप्पा तारइ अप्पा तम्हा अप्पावि झाएहि ॥
पिच्छे णहु सम्मत्तं करगहिए चमरमोरडंबरए ।
समभावे जिणादिट्ठं रायाईदोसचत्तेणं ॥

अमितगत्याचार्यनिर्मिताः निम्नलिखितनामानो ग्रन्था: सन्ति ।

१ धर्मपरीक्षा
२ सुभाषितरत्नसंदोहः
३ भावनाद्वात्रिंशतिः
४ श्रावकाचारः
५ जम्बूद्वीपप्रज्ञप्तिः
६ चन्द्रप्रज्ञप्तिः
७ सार्द्धद्वयद्वीपप्रज्ञप्तिः
८ व्याख्याप्रज्ञप्तिः
९ योगसारप्राभृतं
१० पञ्चसंग्रहः
११ सामायिकपाठः

तत्र धर्मपरीक्षा सुभाषितरत्नसंदोहभावनाद्वात्रिंशतियोगसारप्राभृत श्रावकाचारसामायिकपाठ ग्रन्थाः मुद्रिताः सन्ति । पञ्चसंग्रहस्तु हस्तस्थ-एव । शेषाः प्रज्ञप्तिग्रन्थाः नोपलभ्यन्ते । अयं रचनासंदोहः कवेः सर्वमुखीनपाण्डित्यं व्यनक्ति ।

---

१ ततः कार्ये लघु लगतु आत्मानं ध्यायतु यःनिरालम्बः ।
अथ काष्ठः अथ मूलः संकल्पविकल्पकं त्यजत ॥
संघः कोपि न तारयति काष्ठो मूलः तथैव निःपिच्छः ।
आत्मा तारयति आत्मानं तस्मात् आत्मानं अपि ध्यायत ॥
पिच्छे न हि सम्यक्त्वं करगृहीते चमरमयूरडंबरे ।
समभावे जिनेन दृष्टं रागादिदोषत्यक्तेन ॥

२ "सामायिक पाठः" इति नाम्ना भावनाद्वात्रिंशतिः पृथक् मुद्रिताऽस्ति अयम् सामायिकपाठस्त्वन्यएव माणिकचन्द्रग्रन्थमालायाः सिद्धान्तसारादिसंग्रहे संगृहीतः । अस्यैकविंशत्यधिकशत ( १२१ ) श्लोकाः सन्ति ।

अमितगत्याचार्यस्य रचनाः सरलाः सुखसाध्याः सत्योऽपि गम्भीराः मधुराश्च सन्ति। अयं ग्रन्थस्तु करणानुयोगस्यात्युत्तम ग्रन्थोस्ति। रचना-शैली त्वस्य गोम्मटसाराद्विलक्षणा सरला चास्ति। अनेकस्थलेषु विषय विशेषताप्युलभ्यते। गोम्मटसारकर्मकाण्डाध्ययनन्तु टीकामंकसंदृष्टि-म्विना न शक्यम् किन्तु पञ्चसंग्रहे, आवश्यकाङ्कसंदृष्टिः ग्रन्थकारेण तत्रैव प्रदर्शिता, टीकायाः अप्यावश्यकता मूलरचनयैव दूरीकृता। अतएवायम् छात्राणामप्युपयोग्यस्ति। इत्यलमतिविस्तरेण।





श्रीअमितगतिसूरिविरचितः

# पंचसंग्रहः ।

सर्वसंग्रहनिषेधकोऽपि यः पंचसंग्रहविधानदर्शकः ।
तत्त्वमार्गविनिवेदिनीं जिनः शेमुषीं[1] मम तनोतु संस्थितिम् ॥१॥
[2]बंधकं [3]बध्यमानं यो [4]बंधेशं [5]बंधकारणम् ।
भाषते बंधभेदं[6] च तं स्तुवे भावसंग्रहम् ॥ २ ॥
ये षट् द्रव्याणि बुध्यंते द्रव्यक्षेत्रादिभेदतः ।
जिनेशास्तांस्त्रिधानत्वा करिष्ये जीवरूपणम् ॥ ३ ॥
अनंतानंतसंख्याना जंतवो द्रव्यतोऽखिलाः ।
अनंतलोकसंख्यानाः संक्षेपात्क्षेत्रतो मताः ॥ ४ ॥
अतीतकालतोऽनंतगुणिताः कालतः स्मृताः ।
भावतः केवलानंतभागमाना जिनेश्वरैः ॥ ५ ॥
परीतानंतयुक्तानंतानंतानंतमेकशस्त्रयाणां जघन्योत्कृष्टाजघन्यो-
त्कृष्टभेदेन त्रैविध्यादनंतस्य नवधात्वमुन्नेयम् ॥ ६ ॥
नवधात्वेऽप्यनंतस्य प्रमाणस्य विचक्षणैः ।
अजघन्योत्कृष्टमत्रेदमनंतानंतमीर्यते[7] ॥ ७ ॥

---

१ विचारिणीं । २ जीवं । ३ कर्मप्रकृतिं । ४ गुणस्थानादिषु क्व क्व कियंत्यः प्रकृतयो बंधं यांति । ५ मिथ्यात्वादिप्रत्ययाः । ६ प्रकृतिस्थित्यनुभागप्रदेशभेदेन चतुर्द्धा । ७ न जघन्यः न उत्कृष्टः अजघन्योत्कृष्टः किन्तु मध्यमः ।

जीवभंगो जिनैरुक्तः पुद्गलाद्धाविहायसाम् ।
अनंतगुणितं पूर्वं [1]परतः परतः परम् ॥ ८ ॥
गदितौ द्रव्यतोऽसंख्यौ धर्माधर्मौ प्रदेशतः ।
क्षेत्रतो लोकमानौ तौ लोकं व्याप्य यतः स्थितौ ॥ ९ ॥
अतीतानेहसोऽनन्तभागौ तौ कालतः स्मृतौ ।
*भावतः केवलानन्तभागौ केवललोचनैः ॥ १० ॥
विज्ञातव्या गुणाजीवाः प्राणपर्याप्तिमार्गणाः ।
उपयोगा बुधैः संज्ञा विंशतिर्जीवरूपणाः [2] ॥ ११ ॥
जीवा यैरवबुध्यन्ते भावैरौदयिकादिभिः ।
गुणागुणस्वरूपज्ञैरत्र ते गदिता गुणाः ॥ १२ ॥
जन्तोरौदयिकोऽवाचि क्षायिकः शामिको जिनैः ।
क्षायोपशमिको भावः स्वतत्त्वं पारिणामिकः ॥ १३ ॥

---

१ अग्रेऽग्रे परस्परगुणितमनंतगुणम् । २ १४–१४–१०–६–१४ व्यक्ति ( ४–५–६–१५–३–१६–८–७–४–६–२–६–२–२ ) १२–४ ।
* अस्मादग्रे संदृष्टिरियम् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| द्रव्यतो जीवा अ ≡ क्षेत्रतो ≡ अ.लो. | पुद्गला अ अ ≡ अ अ | कालः अ अ अ ≡ अ अ अ | आकाशं अ अ अ अ | अ अ अ अ | धर्म अ. प्र. ≡ लोक | अधर्म अ प्र ≡ लोक |
| कालतोऽतीत कालात् अ १ | अ अ १ १ | अ अ अ १ १ १ | अ अ अ अ १ १ १ १ | | अतीतः १ भा अ | अतीत १ ≡ भा अ |
| भावतः केवलस्य १ भा. अ. | १ १ अ अ | १ १ १ अ अ अ | १ १ १ १ अ अ अ अ | | १ भा अ | १ ≡ भा अ |

बन्धमौदयिको मोक्षं क्षायिकाः शामिकाश्च ते ।
उभयं कुर्वते मिश्रा नोभयं पारिणामिकाः ॥ १४ ॥
मिथ्यादृष्टिर्जिनैराद्यो द्वितीयः श्रस्तदर्शनः[1] ।
तृतीयोऽकथि मिश्रोऽन्यः सम्यग्दृष्टिरसंयतः ॥ १५ ॥
संयतासंयतस्तस्मात्पंचमः शुद्धदृष्टिकः ।
प्रमत्तसंयतः षष्ठः सप्तमोऽतोऽप्रमत्तकः ॥ १६ ॥
अपूर्वकरणो द्वेधाऽनिवृत्तिकरणो द्विधा ।
द्वेधा सूक्ष्मकषायोऽतः शमकक्षपकत्वतः ॥ १७ ॥
शान्तक्षीणकषायौ स्तो योग्ययोगौ ततो जिनौ ।
चतुर्दशगुणातीता जीवाः सिद्धास्ततः परे ॥ १८ ॥
तत्त्वानि जिनदृष्टानि यस्तथ्यानि न रोचते ।
मिथ्यात्वस्योदये जीवो मिथ्यादृष्टिरसौ मतः ॥ १९ ॥
संयोजनोदये[2] भ्रष्टो जीवः प्रथमदृष्टितः[3] ।
अन्तरा[4]ऽनात्तमिथ्यात्वो वर्ण्यते श्रस्तदर्शनः ॥ २० ॥
जघन्यः समयः कालः प्रकृष्टोऽस्य षडावलिः ।
कथ्यतेऽन्तर्मुहूर्तस्य[5] शेषभूतो मनीषिभिः ॥ २१ ॥
सम्यग्मिथ्यारुचिर्मिश्रः सम्यङ्मिथ्यात्वपाकतः ।
सुदुष्करः पृथग्भावो दधिमिश्रगुडोपमः ॥ २२ ॥
पाकाच्चारित्रमोहस्य व्यस्त[6]प्राण्यक्षसंयमः ।
त्रिष्वेकतमसम्यक्त्वः सम्यग्दृष्टिरसंयतः ॥ २३ ॥
यस्त्राता त्रसकायानां हिंसिता स्थावराङ्गिनां ।
अपकाष्टकषायोऽसौ संयतासंयतो मतः ॥ २४ ॥

---

१ सासादनः । २ अनन्तानुबन्धिचतुष्कोदये । ३ उपशमसम्यक्त्वात् । ४ अन्तरालवर्ती । ५ उपशमसम्यक्त्वकालस्य । ६ प्राणीन्द्रियसंयमरहितः ।

सम्यग्दृष्टिर्व्रतीज्ञेयः सामायिकविधायकः ।
प्रोषधी प्रासुकाहारी निरस्तदिनमैथुनः ॥ २५ ॥
ब्रह्मचारी निरारंभः परिग्रहपराङ्मुखः ।
निरस्तानुमतिस्त्रेधा विमुक्तोद्देशिकाशनः ॥ २६ ॥
इत्थमेकादश प्रोक्ता भेदास्तस्य मुनीश्वरैः ।
त्रायते यदि यत्नेन त्रसानां दशकं[1] सदा ॥ २७ ॥
न यस्य प्रतिपद्यन्ते कषाया द्वादशोदयं ।
व्यक्ताव्यक्तप्रमादोऽसौ प्रमत्तः संयतः स्मृतः ॥ २८ ॥
संज्वलनोकषायाणामुदये सत्यनुद्यमः ।
धर्मेशुद्ध्यष्टके वृत्ते प्रमादो गदितो यतेः ॥ २९ ॥
क्षान्तिः शौचंसंयमोऽकिंचनत्वं सत्यं त्यागो ब्रह्मचर्यंतपश्च ।
कार्यो भव्यैरार्जवं मार्दवं च प्राज्ञैर्धर्मो द्व्यष्टधेतिप्रणीतः ॥३०॥
मनोवाक्कायभैक्षेर्याशय्योत्सर्गाविनीतिषु ।
कुर्वतः सर्वदा शुद्धिं शुद्ध्यष्टकमुदीरितं ॥ ३१ ॥
पंचपंचत्रिसंख्यानाः समितिव्रतगुप्तयः ।
वृत्तं निवेद्यते साधोस्त्रयोदशविकल्पकम् ॥ ३२ ॥
कषायप्रणयस्वापविकथाक्षाणि योगिनः ।
प्रमादाश्चतुरेकैकचतुः पंच यथाक्रमम् ॥ ३३ ॥
शमक्षयपराचीनः कर्मणामुद्यसंयमः ।
निष्प्रमादोऽप्रमत्तोऽस्ति धर्म्यं ध्यानमधिष्ठितः ॥ ३४ ॥
अपूर्वः करणो येषां भिन्नं क्षणमुपेयुषां ।
अभिन्नं सदृशोऽन्योवा तेऽपूर्वकरणाः स्मृताः ॥ ३५ ॥

---

१ पर्याप्तापर्याप्तभेदयुक्तद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिसंज्ञिपंचेन्द्रिय-भेदरूपम् । २ द्वौ+अष्ट=दश ।

न पूर्वं करणाः प्राप्ता ये ते भिन्नक्षणस्थितैः ।
गुणस्थानमिदं यातैरपूर्वकरणास्ततः ॥ ३६ ॥
क्षपयन्ति न ते कर्म शमयन्ति न किंचन ।
केवलं मोहनीयस्य शमनक्षपणोद्यताः ॥ ३७ ॥
ये संस्थानादिना भिन्नाः समानाः परिणामतः ।
समानसमयावस्थास्ते भवन्त्यनिवृत्तयः ॥ ३८ ॥
येनानिवृत्तयस्तुल्या भावास्तुल्यक्षणश्रिताम् ।
तेनानिवृत्तयो वाच्या वाच्यवाचकवेदिभिः ॥ ३९ ॥
क्षपयन्ति महामोहविद्विषं शमयन्ति ते ।
विनिर्मलतरैर्भावैः स्थूलकोपादिवृत्तयः ॥ ४० ॥
पूर्वापूर्वाणि विद्यन्ते स्पर्धकानि विशेषतः ।
संज्वालस्यानुभागस्य यानि तेभ्यो व्यपेत्य यः ॥ ४१ ॥
अनन्तगुणहीनानुभागो लोभे व्यवस्थितः ।
अणीयसि यथार्थाख्यः सूक्ष्मलोभः स संमतः ॥ ४२ ॥
लोभसंज्वलनः सूक्ष्मः शमं यत्र प्रपद्यते ।
क्षयं वा संयतः सूक्ष्मः संपरायः स कथ्यते ॥ ४३ ॥
कौसुंभोऽन्तर्गतो रागो यथावस्त्रेऽवतिष्ठते ।
सूक्ष्मलोभगुणे लोभः शोध्यमानस्तथा तनुः ॥ ४४ ॥

---

१ स्पर्धकानां संदृष्टिरियं—






(शेषमग्रे पृष्ठे.)

वर्गः शक्तिसमूहोऽणोरणूनां वर्गणोदिता ।
वर्गणानां समूहस्तु स्पर्धकं स्पर्धकापहैः ॥ ४५ ॥
वर्धमानं मतं पूर्वं हीयमानमपूर्वकं ।
स्पर्धकं द्विविधं ज्ञेयं स्पर्धकक्रमकोविदैः ॥ ४६ ॥
अधोमले यथा नीते कतकेनाम्भोऽस्ति निर्मलं ।
उपरिष्टात्[1]तथा शान्तमोहो ध्यानेन मोहने[2] ॥ ४७ ॥
तदेवाम्भो यथाऽन्यत्र पात्रे न्यस्तं मलं विना ।
प्रसन्नं मोहने क्षीणे क्षीणमोहस्तथा यतिः ॥ ४८ ॥




१ उपशमात् । २ मोहकर्मणि

घातिकर्मक्षये लब्धा नवकेवललब्धयः ।
येनासौ विश्वतत्त्वज्ञः सयोगः केवली विभुः ॥ ४९ ॥
प्रदह्याऽघातिकर्माणि शुद्धध्यानकृशानुना ।
अयोगो याति शीलेशो मोक्षलक्ष्मीं निराश्रवः ॥ ५० ॥
संप्राप्ताष्टगुणा नित्याः कर्माष्टक निराशिनः ।
लोकाग्रवासिनः सिद्धा भवन्ति निहितापदः ॥ ५१ ॥
मोहे[1]द्वितयमाश्रित्य त्रयो ज्ञेया गुणा नवे ।
चारित्रमोहमन्ये द्वौ योगं गुणिभिरन्तिमौ ॥ ५२ ॥
मिथ्यादृष्टौ मतो मिश्रेभाव औदयिको जिनैः ।
संयोजनोदयोत्थाने सासने पारिणामिकः ॥ ५३ ॥
क्षायिकः शामिको भावः क्षायोपशमिकोऽथवा ।
वृत्तमोहोदयापेक्षे सम्यग्दृष्टावसंयते ॥ ५४ ॥
क्षायोशमिको भावो गुणानां त्रितये[3] परे ।
क्षायिकः शामिकोऽन्यत्र शामिकः शान्तमोहने ॥ ५५ ॥
क्षायिकः क्षीणमोहेऽस्ति सयोगायोगयोरपि ।
आनुपूर्वीरितैतेषामुत्तरोत्तरशुद्धितः ॥ ५६ ॥
मूर्च्छारंभपरित्यक्तमुपयोगगुणार्चितं ।
ते लिंगमपरापेक्षं संयता बिभ्रते नवं ॥ ५७ ॥
रूपतः सदृशाः सर्वे त्यक्तबाह्यपरिग्रहाः ।
असदृक्षाः परीणामैरुपर्युपरिशुद्धयः ॥ ५८ ॥

---

१ दर्शनचारित्रमोहं । २ अविरतादिक्षीणकषायान्ताः । ३ पंचमषष्ठसप्तमगुणस्थानेषु । ४ अपूर्वकरणादित्रये । ५ भावानाम् । ६ प्रमत्ताद्ययोगकेवलिपर्यन्ताः ।

अनन्तानन्तसंख्याना जीवामिथ्यात्ववर्तिनः ।
पल्यासंख्यातभागास्तु परे गुणचतुष्टये ॥ ५९ ॥
शब्दसाम्येऽपि धीमद्भिः संख्याभेदः परस्परं ।
गुणस्थानचतुष्केऽत्र विबोद्धव्योयथागमं ॥ ६० ॥

मि. अ. अ. । सा. प. अ. । मि. प. अ. । अ. प. अ. । दे. प. अ. । तदाह——षट्त्रिंशपंचशतपंचषष्टिसहस्रप्रमाणं (६५५३६) पल्योपमं परिकल्प्यं । द्वात्रिंशता ३२, षोडशभिः १६, (भागे) चतुर्भिः ४, अष्टाविंशतिशतेन १२८ आवल्यसंख्यभागेन परिकल्पतेन भागे हृते क्रमेण सासादनाः अष्टाचत्वारिंशद्द्विसहस्रप्रमाः २०४८ । मिश्राः षण्णवत्यधिकचतुःसहस्रप्रमाः ४०९६ । असंयताः चतुरशीत्यधिकशतत्रयषोडशसहस्रप्रमाः १६३८४ । देशसंयताः द्वादशोत्तरपंचशतप्रमाः ५१२ ।

मनुष्यापेक्षया पुनराह——

द्विपंचाशत्तनूभाजो सासने मिश्रके मताः ।
द्विगुणाः सप्त सद्दृष्टौ देशे कोटयस्त्रयोदश ॥ ६१ ॥

सा. ५२०००००००। मि. १०४००००००० ।
असं. ७०००००००००। दे. १३००००००० ।

प्रमत्ताः कोटयः पंचलक्षास्त्रिनवातिप्रमाः ।
सहस्राष्टानवत्यामा षड्डुत्तरशतद्वयं ॥ ६२ ॥

५९३९८२०६

अप्रमत्ता भवन्त्येते द्वाभ्यां भागे हृते सति ।
शमकक्षपकार्हद्भिर्युक्तास्ते सन्ति संयताः ॥ ६३ ॥

द्वाभ्यां भागे हृते प्रमत्ता अप्रमत्ता भवन्ति। २९६९९१-०३। ते प्रमत्ताप्रमत्तसंयताः शमकक्षपकार्हद्भिर्युक्ताः सर्वसंयताः भवन्ति। ८९९९९९९७।

संयताः पान्तु मां सर्वे त्रिहीना नवकोटयः।
सर्वशीलगुणाधारा गुणानां नवके स्थिताः॥ ६४॥
शमकाः षोडशापूर्वे विंशतिश्चतुरुत्तरा।
त्रिंशत्षट्त्रिंशदेतेऽतो द्वाचत्वारिंशदीरिताः॥ ६५॥
चत्वारिंशत्सहाष्टाभिः पंचाशद्द्विचतुर्युताः।
अष्टासु समयेष्वेते प्रविशन्ति क्षणे क्षणे[१]॥ ६६॥
अपूर्वकरणे सर्वे त्रिशती चतुरुत्तरा।
शमकाः मिलिताः सन्ति क्षपकाः द्विगुणस्ततः॥ ६७॥
अपूर्वे शमकाः ३०४ क्षपकाः ६०८।
सर्वोत्कृष्टप्रमाश्लिष्टा लल्यन्ते न यतः क्षणाः।
आचार्यैरपरैरुक्ताः पंचभी रहितास्ततः॥ ६८॥
शमका मिलितास्तस्मादेकोनत्रिशतप्रमाः।
न्यूनषट्शतसंख्याना अपूर्वे क्षपकाःस्मृताः॥ ६९॥

---

१ अस्मादग्रेतनो मूल पाठः।

० ५४
० ५४
० ४८
० ४२
० ३६
० ३०
० २४
० १६

शमकाः २९९ क्षपकाः ५९८ ।
तेषां चतुर्भिरभ्यासे शमकानां समुच्चयः ।
पंचभिः क्षपकानां तु कथ्यते क्षीणकल्मषैः ॥ ७० ॥
गुणचतुष्के शमकाः ११९६ । गुणपंचके क्षपकाः २९९० ।
क्षणाष्टकाधिके वर्षपृथक्त्वे समयाष्टकं ।
जायते शमकश्रेणिप्रवेशार्हं तपस्विनां ॥ ७१ ॥
एकादिषोडशाद्यन्ता प्रविशन्ति क्षणे क्षणे ।
साधवः शमकश्रेणौ मोहनीयशमोद्यताः ॥ ७२ ॥
उपर्युपरि निक्षिप्य षोडशादीन् क्षिपेत्सुधीः ।
एकैकाष्टकमादाय चतुर्विंशादितोऽग्रतः ॥ ७३ ॥
एकद्वित्रिचतुःपंचषट्कानि त्रिंशदादितः ।
गृहीत्वा क्रमतो विद्वानग्रेतेभ्यो विनिक्षिपेत् ॥ ७४ ॥
कृत्वा चतुर्दशैकत्र द्वौ द्वावष्टावतो बुधः ।
गृहीत्वा स्थापयेत्तस्मिन्नेकैकं यत्र षोडश ॥ ७५ ॥
सर्वेषामग्रिमे शेषं निदध्यात्षट्कमग्रतः ।
लब्ध्वा क्षणाष्टके वृद्धिः षड्भिः सप्तदशादितः[1] ॥ ७६ ॥

---

१ अस्मादग्रेतनो मूलपाठोऽयं ।
० १७ ६ ६ ६ ६ ६ ६ ६ । आदिः १७ । वृद्धिः ६ । पदं ८ ।
० १७ ६ ६ ६ ६ ६ ६ ।
० १७ ६ ६ ६ ६ ६ ।
० १७ ६ ६ ६ ६ ।
० १७ ६ ६ ६ ।
० १७ ६ ६ ।
० १७ ६ ।
० १७ ।

एकहीनं पदं वृद्ध्या ताडितं द्विभिर्भाजितं ।
आदियुक्तं पराभ्यस्तमीप्सितं गणितं मतं ॥ ७७ ॥

३०४ पदं । ८ वृद्धिः । १२ आदि ३४ आगतं त्रैराशिकेन ६०८ क्षपकाः ।

लभ्यते क्षपकश्रेणौ क्षपकानां प्रवेशने ।
अष्टक्षणाधिके योग्यं मासषट्के क्षणाष्टकं ॥ ७८ ॥
द्वात्रिंशत्समयेऽष्टाग्रा चत्वारिंशत्ततस्ततः ।
षष्टिर्द्वासप्ततिस्तस्मादशीतिश्चतुरुत्तरा ॥ ७९ ॥
ततः षण्णवतिर्द्वेधा शतमष्टोत्तरं ततः ।
विशन्ति क्षपकश्रेणिं मोहक्षपणकांक्षिणः ॥ ८० ॥
संस्थाप्य क्रमतः सर्वानुपर्युपरि पूर्ववत् ।
करोति पूर्वसूत्रेण क्षपकानयनं कृती ॥ ८१ ॥
द्वितीयादिक्षणस्थेभ्यः क्रमेणक्रमकोविदः ।
आदायनिक्षिपेत्तेभ्यः पुरः षोडशषोडश ॥ ८२ ॥
[2]तृतीयादिक्षणस्थेभ्यो द्वादशद्वादशाग्रतः ।
एकद्वित्रिचतुः पंचवारानादाय निक्षिपेत् ॥ ८३ ॥

---

१ ० १०८
० १०८
० ९६
० ८४
० ७२
० ६०
० ४८
० ३२

२ क पुस्तके नास्त्ययम् श्लोकः

चतुरश्चतुरो लात्वा षोडशभ्यः क्षिपेत्ततः ।
द्वितयं द्वितयं तत्र द्वात्रिंशद्यत्र दृश्यते ॥ ८४ ॥
सर्वेषामग्रिमे शेषान्निक्षिपेद्द्वादशाग्रतः ।
लब्ध्वा द्वादशभि र्वृद्धिस्त्रिंशतश्चतुरग्रतः ॥ ८५ ॥
सक्षणाष्टकषण्मास्यामेकत्राष्टक्षणा यदि ।
इयतीनां तदा तासां सद्वियोग्याः कतिक्षणाः ॥ ८६ ॥
चत्वारिंशत्सहस्राणि षण्मास्योऽष्टक्षणाधिकाः ।
भवन्त्यष्टशतान्येकचत्वारिंशानि सिद्ध्यताम् ॥ ८७ ॥
४०८४१
आद्यन्तयोः प्रमाणेच्छे विधायान्तस्तयोः फलं ।
अन्तेन गुणितं कृत्वा भजनीयं तदादिना ॥ ८८ ॥
इति त्रैराशिकेन लब्धाः समयाः—
समयानां त्रयोलक्षाः षड्विंशतिसहस्रकाः ।
अष्टाविंशं विबोद्धव्यमपरे शतसप्तकं ॥ ८९ ॥
३२६७२८
क्षणेष्वष्टसु मोक्षार्हाः सन्ति द्वाविंशतिर्यदि ।
इयत्सु कति लभ्यन्ते तदानीं मोक्षभागिनः ॥ ९० ॥

१ अस्मादग्रेतनो मूलपाठोऽयम्—

० ३४ १२ १२ १२ १२ १२ १२ १२
० ३४ १२ १२ १२ १२ १२ १२
० ३४ १२ १२ १२ १२ १२
० ३४ १२ १२ १२ १२
० ३४ १२ १२ १२
० ३४ १२ १२
० ३४ १२
० ३४

२ अस्मादग्रेतनो मूलपाठोऽयम्

० २
० २
० ३
० ३
० ३
० ३
० ३
० ३

एते मिलिताः द्वाविंशतिः २२ त्रैराशिकेन लब्धा योगिजिनाः॥

अष्टलक्षाणि लभ्यन्ते जिनानां जितजन्मनाम् ।
सहस्राष्टानवत्यामा द्युत्तरं शतपंचकं ॥ ९१ ॥
चत्वारः श्वाभ्रदेवेषु पंच तिर्यक्षु भाषिताः ।
नृषु सर्वे गुणा जैनैरेकमेकेन्द्रियादिषु ॥ ९२ ॥
अनेकेऽनेकधा जीवा यैर्ज्ञायन्ते स्वजातिजाः ।
ज्ञेया जीवसमासास्ते समासेन चतुर्दश ॥ ९३ ॥
एकाक्षा बादराः सूक्ष्मा व्यक्षाद्या विकलास्त्रयः ।
पंचाक्षाः संज्ञ्यसंज्ञाख्याः सर्वे पर्याप्तकेतरे ॥ ९४ ॥
एकेन्द्रियेषु चत्वारः समासा विकलेषु षट् ।
पंचेन्द्रियेषु चत्वारो भवन्त्येते चतुर्दश ॥ ९५ ॥
चतुर्दशसु पंचाक्षः पर्याप्तस्तत्र वर्तते ।
एतच्छास्त्रमतेनाग्रे गुणस्थानद्वयेऽपरे ॥ ९६ ॥
पूर्णः पंचेन्द्रियः संज्ञी चतुर्दशसु वर्तते ।
सिद्धान्तमततो मिथ्यादृष्टौ सर्वे गुणे परे ॥ ९७ ॥
चतुर्दशाङ्गिनां भेदा एकविंशतिरीरिताः ।
त्रिंशत्सद्विषडष्टाग्रा चत्वारिंशद्युताष्टभिः ॥ ९८ ॥
चतुः पंचाशदर्थज्ञैः सप्तपंचाशदप्यतः ।
विज्ञाय संयतै रक्ष्या विशेषेणेति सर्वदा ॥ ९९ ॥

---

१ अस्मादग्रेतनो मूलपाठः ।

|० १,० ०|( १४ )

|१,०|
|१,०|
|१,०|

|० १,१ ०|

अपर्याप्ता मता ये ये चतुर्दशसु देहिनः ।
ते ते निर्वृत्यपर्याप्तलब्ध्यपर्याप्तयो द्विधा ॥ १०० ॥
चतुर्दशापि तैर्युक्तास्ते भवन्त्येकविंशतिः ।
इदानीं त्रिंशदुच्यन्ते निगद्येत्येकविंशति[1]ः ॥ १०१ ॥
पंच स्थावरकाया ये ते प्रत्येकं चतुर्विधाः ।
दशत्रसयुता जीवसमासास्त्रिंशदीरिता[2]ः ॥ १०२ ॥
द्विधा साधारणो ज्ञेयः प्रत्येकाङ्गो वनस्पतिः ।
साधारणश्चतुर्धात्र प्रत्येकांगः पुनर्द्विधा ॥ १०३ ॥
पूर्णाऽपूर्णतया तत्र प्रत्येकाङ्गः स्मृतो द्विधा ।
वनस्पतिर्यतः षोढा द्वात्रिंशत्त्रिंशदस्त्यत[3]ः ॥ १०४ ॥
एकमेकस्य यस्याङ्गं प्रत्येकाङ्गः स कथ्यते ।
साधारणः स यस्याङ्गमपरैर्बहुभिः समम् ॥ १०५ ॥
गूढसन्धिशिरापर्व समभंगमहीरुहं ।
साधारणं वपुश्छिन्नरोहि प्रत्येकमन्यथा ॥ १०६ ॥
एकत्र म्रियमाणे ये म्रियन्ते देहिनोऽखिलाः ।
जायन्ते जायमाने ते लक्ष्याः साधारणाः बुधैः ॥ १०७ ॥

---

१ अस्माद्ग्रेतनोमूलपाठोऽयम् ।

(२१)

| | | | | | |
|---|---|---|---|---|---|
| ० | ० | १ | १ | ० | ० |
| | | १ | ० | ० | |
| | | १ | ० | ० | |
| | | १ | ० | ० | |
| ० | ० | १ | १ | ० | ० |

२ (३०)

| | | | |
|---|---|---|---|
| ० | १ | १ | ० |
| | १ | ० | |
| | १ | ० | |
| | १ | ० | |
| ० | १ | १ | ० |
| ० | १ | १ | ० |
| ० | १ | १ | ० |
| ० | १ | १ | ० |
| ० | १ | १ | ० |

३

| | | | | |
|---|---|---|---|---|
| ० | १ | १ | ० | सा. प्र. |
| | १ | ० | | १० (स. प्र.) |
| | १ | ० | | ३२ (अ. प्र.) |
| | १ | ० | | |
| ० | १ | १ | ० | |
| ० | १ | १ | ० | |
| ० | १ | १ | ० | |
| ० | १ | १ | ० | |
| ० | १ | १ | ० | |

नित्येतरनिगोतत्वभेदात्साधारणा द्विधा ।
प्रत्येकं ते चतुर्भेदाःस्थूलसूक्ष्मादिभेदतः ॥ १०८ ॥
अष्टभेदा यतो जाताः साधारणशरीरिणः ।
द्वात्रिंशदुच्यते पूर्वा षट्त्रिंशत्साधुभिस्ततः ॥ १०९ ॥
त्रसत्वं ये प्रपद्यन्ते कालानां त्रितयेऽपि नो ।
ज्ञेया नित्यनिगोतास्ते भूरिपापवशीकृताः ॥ ११० ॥
कालत्रयेऽपि यैर्जीवैस्त्रसता प्रतिपद्यते ।
सन्त्यनित्यनिगोतास्ते चतुर्गतिविहारिणः ॥ १११ ॥
प्रत्येका देहिनो द्वेधा प्रतिष्ठिताप्रतिष्ठिताः ।
प्रत्येकं तेऽपि जायन्ते पूर्णापूर्णतया द्विधा ॥ ११२ ॥
प्रत्येकाङ्गाश्चतुर्भेदा यतः सन्ति शरीरिणः ।
अष्टत्रिंशत्ततः पूर्वा षट्त्रिंशद्गदिता बुधैः ॥ ११३ ॥
पृथिव्यां ये प्ररोहन्ति ते भण्यन्ते प्रतिष्ठिताः ।
उपरिष्टाद्ये जलादीनां ते भवन्त्यप्रतिष्ठिताः ॥ ११४ ॥
सन्ति निर्वृत्त्यपर्याप्तलब्ध्यपर्याप्तभेदतः ।
अपर्याप्ता यतो द्वेधा द्वात्रिंशति शरीरिणः ॥ ११५ ॥

---

१
०११०
१०
१०
१०
०११०।०११०।११०
नि. ०११० सा.प्र.
०११० ३६
०११०
०११०

२
० ११ ० ३८
सा.इ. १०
नि. १०
१०
०११०।०११०।०११०
०११० अ. अ.
०११०
०११०
०११०

चत्वारिंशत्ततोऽष्टाग्रा सा द्वात्रिंशन्निवेदिताः ।
चतुःपंचाशदादिष्टा तथा षट्त्रिंशदुत्तमैः ॥ ११६ ॥
अष्टात्रिंशत्पुरः प्रोक्ता सप्तपंचाशदुच्यते ।
लब्ध्यनिर्वृत्त्यपर्याप्तभेदतोऽपूर्णदेहिनाम् ॥ ११७ ॥
अथवा जीव सामान्य स्थावरत्रसपूर्वकैः ।
जीवभेदा विबोद्धव्या भेदैर्भेदविशारदैः ॥ ११८ ॥

| १ | २ | ३ |
|---|---|---|
| सा | स्था. त्र. | ए. वि. स. |
| १ | १ १ | १ १ १ |

| ४ | ५ |
|---|---|
| ए. वि. अ. सं. | ए. द्वी. त्री. च. प. |
| १ १ १ १ | १ १ १ १ १ |

| ६ | ७ |
|---|---|
| पृ. अ. ते. वा. व. त्र. | पृ. अ. ते. वा. व. वि. स. |
| १ १ १ १ १ १ | १ १ १ १ १ १ १ |

---

१

००११०० | ४८
१०० प्र.
१००१००
१००
००११००
००११००
००११००
००११००
००११००

२

००११०० | ५४
सा.इ. १००
नि. १००
१००
००११०० | ००११०० | १००
००११००
००११००
००११००
००११००

३

००११००
सा.नि. १००
१००
१००
००११०० | ००११०० | १०० | १००
००११०० | १० प्र. अ.
००११००
००११००
००११००

| ८ | | | | | | | |
|---|---|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | व. | वि. | अ. | सं. |
| १ | १ | १. | १ | १ | १ | १ | १ |

| ९ | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | व. | द्वी. | त्री. | च. | पं. |
| १ | १ | १ | १ | १ | १ | १ | १ | १ |

| १० | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | व. | द्वी. | त्री. | च. | अ. | सं. |
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |

धरादयो द्विधा ज्ञेया बादरेतरभेदतः ।
जीवभेदावबोधाय पटीयोभिर्यथाक्रमम् ॥ ११९ ॥

| ११ | | | | | |
|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | व. | त्र. |
| २ | २ | २ | २ | २ | १ |

| १२ | | | | | |
|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | व. | त्र. |
| २ | २ | २ | २ | २ | २ |

| १३ | | | | | | | |
|---|---|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | व. | वि. | अ. | सं. |
| २ | २ | २ | २ | २ | १ | १ | १ |

| १४ | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | व. | द्वी. | त्री. | च. | पं. |
| २ | २ | २ | २ | २ | १ | १ | १ | १ |

| १५ | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | व. | द्वी. | त्री. | च. | अ. | सं. |
| २ | २ | २ | २ | २ | १ | १ | १ | १ | १ |

२ पं० सं०

१६

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | नि. | च. | प्र. | वि. | अ. | सं. |
| २ | २ | २ | २ | २ | २ | १ | १ | १ | १ |

१७

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | नि. | च. | प्र. | अ. | वि. | अ. | सं. |
| २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ |

१८

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | नि. | च. | प्र. | द्वी. | त्री. | च. | अ. | सं. |
| २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ |

१९

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| पृ. | अ. | ते. | वा. | नि. | च. | प्र. | अ. | द्वी. | त्री. | च. | अ. | सं. |
| २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ |

एकाद्यः समासा ये यावदेकोनविंशतिः ।
ते पर्याप्तेतराभ्यस्ताःकार्या भेदावबुद्धये ॥ १२० ॥

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६. १७. १८. १९.

ते पर्याप्तेतराभ्यस्ताः—

२. ४. ६. ८. १०. १२. १४. १६. १८. २०. २२. २४. २६. २८. ३०. ३२. ३४. ३६. ३८.

पर्याप्तलब्ध्यपर्याप्तनिर्वृत्यपर्याप्तकैस्त्रिभिः ।
एकादीनां विधे ज्ञेया जीवभंगप्रकृष्टताः ॥ १२१ ॥

३. ६. ९. १२. १५. १८. २१. २४. २७. ३०. ३३. ३६. ३९. ४२. ४५. ४८. ५१. ५४. ५७.

सप्तपंचाशतं ज्ञात्वा भेदान् ये पान्ति जन्मिनः ।
ते संसारपयोराशेः संयतास्तारयन्तु माम् ॥ १२२ ॥

प्राणन्ति यैः सदा जीवाः प्राणैर्बाह्यैरिवांतरैः ।
प्राणाः प्रवर्तमानास्ते प्राणिनां जीविताबधि ॥ १२३ ॥
हृषीकपंचकं स्वान्तवचःकायबलत्रयम् ।
आयुरुच्छ्वासनिःश्वासौ दशप्राणा भवन्त्यमी ॥ १२४ ॥
सर्वेष्वङ्गेन्द्रियायूंषि पूर्णेष्वानः शरीरिषु ।
वाग्द्वित्र्यादिहृषीकेषु मनः पूर्णेषु संज्ञिषु ॥ १२५ ॥
ते संज्ञिनि दशैकैको हीनोऽन्येष्वन्त्यैयोर्द्वयं ।
अपर्याप्तेषु सप्ताद्योरेकैकोऽन्येषु हीयते ॥ १२६ ॥
४-४-६-७-८-९-१० । ७-७-६-५-४-३-३
पूर्णापूर्णा यथा सन्ति पदार्था भवनादयः ।
पूर्णापूर्णास्तथा जीवा विज्ञातव्या मनीषिभिः ॥ १२७ ॥

---

आहाराङ्गहृषीकानभाषामानसलक्षणाः ।
पर्याप्तयः षडङ्गादिशक्तिनिष्पत्तिहेतवः ॥ १२८ ॥
अन्तर्मुहूर्त्तवर्तिन्यश्चतस्रः पंचषण्मताः ।
ता यथाक्रममेकाक्षविकलेन्द्रियसंज्ञिनाम् ॥ १२९ ॥
आयुःपर्याप्तिनिष्पन्नाः सर्वकालोपलब्धितः ।
प्राणिनां शक्तयः प्राणाः शस्वज्जीवनहेतवः ॥ १३० ॥

---

यकाभिर्यासु वा जीवा मार्ग्यन्तेऽनेकधास्थिताः ।
मार्गणा मार्गणादक्षैस्ताश्चतुर्दशभाषिताः ॥ १३१ ॥
गतयः करणं कायो योगो वेदः क्रुदा ( धा ) दयः ।
वेदनं संयमो दृष्टिर्लेश्या भव्यः सुदर्शनम् ॥ १३२ ॥

---

१ एकेन्द्रिय बादरसूक्ष्मयोः । २ श्वासोच्छ्वासः । ३ ज्ञानं । ४ दर्शनं ।
५ सम्यक्त्वं ।

संज्ञी चाहारकः प्रोक्तास्ताश्चतुर्दश मार्गणाः ।
मिथ्यादृशादयो जीवा मार्ग्या यासु सदादिभिः ॥ १३३ ॥
४–५–६–१५–३–४–८–७-४–६–२–६–२–२ ।
नरो गत्यामपर्याप्तः संयमे सूक्ष्मसंयमः ।
साहारकद्वयो योगे मिश्रवैक्रियिकः परः ॥ १३४ ॥
सम्यक्त्वे शामिको[1] मिश्रः सम्यग्दर्शनविच्युतः ।
सान्तरा[2] मार्गणाश्चाष्टौ पराः सन्ति निरन्तराः ॥ १३५ ॥
गतौ १ । संयमे १ । योगे ३ । सम्यक्त्वे ३ । मिलिताः ८ ।
यया गच्छन्ति संसारं या कृतागतिकर्मणा ।
श्वभ्रगत्यादिभेदेन गतिः सास्ति चतुर्विधा ॥ १३६ ॥
न रमन्ते महादुःखा ये द्रव्यादिचतुष्टये ।
ये परस्परतो दीना नारकास्ते निरूपिताः ॥ १३७ ॥
कुटिला ये तिरोऽञ्चन्ति विवेकविकलाशयाः ।
मायाकर्मबलोत्पन्नास्ते तिर्यंचः प्रकीर्तिताः ॥ १३८ ॥
हेयादेयानि मन्यन्ते ये मनोज्ञानलोचनाः ।
द्विधा म्लेच्छार्यभेदेन मानवास्ते निवेदिताः ॥ १३९ ॥
दिव्यन्ति सर्वदाष्टाभिर्ये गुणैरणिमादिभिः ।
दिव्यदेहा मता देवाश्चतुर्धा ते विभास्वराः ॥ १४० ॥
जन्ममृत्युजरारागसंयोगाविगमादयः ।
न यस्यां जातु जायन्ते सा सैद्धा गदिता गतिः ॥ १४१ ॥

१ सासादनः । २ अपर्याप्तमनुष्यस्य पल्योपमासंख्याततमभागः शून्यकालः । आहारकद्वितयस्य सप्ताष्टौ वर्षाणि । वैक्रियिकमिश्रे द्वादशमुहूर्ताः । सूक्ष्मसंयमे षण्मासाः । सासादनमिश्रयोः पल्योपमासंख्याततमभागः । सप्त दिनानि औपशमिके ।

अहमिन्द्रा इवैकैकमीशन्ते[1] यानि सर्वदा ।
तानीन्द्रियाण्यहंयूनि[2] विज्ञेयानि विचक्षणैः ॥ १४२ ॥
यवनालमसूरातिमुक्तकेन्द्वर्धसन्निभाः ।
श्रोत्राक्षिघ्राणजिह्वाःस्युः स्पर्शनेऽनेकधाकृतिः ॥ १४३ ॥
एकाक्षे स्पर्शनं जन्तावेकैकं वर्धते ततः ।
अन्येषु रसनं घ्राणं चक्षुः श्रोत्रं यथाक्रमम् ॥ १४४ ॥
अस्पृष्टं दृश्यते रूपं स्पृष्टः शब्दो निशम्यते ।
सदा गन्धो रसः स्पर्शो बद्धः[3] स्पृष्टोऽवबुद्ध्यते ॥ १४५ ॥
वेदनं दर्शनं भोगं स्वामित्वं कुरुते यतः ।
एकेन स्पर्शनेनोक्त एकाक्षः पंचधा[4] ततः ॥ १४६ ॥
जलूकाशुक्तिशम्बूकगण्डूपदकपर्दिकाः ।
जठरकृमिशंखाद्या द्वीन्द्रियादेहिनो मताः ॥ १४७ ॥
कुन्थुः पिपीलिका गुंभी यूका मत्कुणवृश्चिकाः ।
मर्कोटकेन्द्रगोपाद्यास्त्रीन्द्रियाः[5] सन्ति देहिनः ॥ १४८ ॥
पतङ्गा मशका दंशा मक्षिकाः कीटगर्मुतः[6] ।
पुत्तिका[7] चंचरीकाद्याश्चतुरक्षाः शरीरिणः ॥ १४९ ॥
नारका मानवा देवा तिर्यंचश्च चतुर्विधाः ।
सामान्येन विशेषेण पंचाक्षा बहुधास्थिताः ॥ १५० ॥
इन्द्रियार्थसुखातीता लोकालोकविलोकिनः ।
क्षायिकातीन्द्रियज्ञाना जीवाः सन्ति निरिन्द्रियाः ॥ १५१ ॥

---

कर्मभारं वहत्यङ्गी कायमादाय सर्वदा ।
सुदुर्वहं महाभारं कावटीमिव कर्मठः ॥ १५२ ॥

१ प्रभवन्ति । २ अहङ्कारयुक्तानि । ३ स्पृष्टः । ४ पृथिव्यादिभेदेन । ५ मंकोडा । ६ मधुमक्षिकाः । ७ नीलमक्षिकाः ।

पिण्डः पौद्गलिकः कायो जीवव्यापारसंचितः ।
भेदाः षडस्य भूम्यम्भोवन्हिवायुतरुत्रसाः ॥ १५३ ॥
समानास्ते मसूराम्भोविन्दुशूचीव्रजध्वजैः ।
धराम्भोऽग्निमरुत्कायाः क्रमाच्चित्रास्तरुत्रसाः ॥ १५४ ॥
शर्करा सिकता पृथ्वी रत्नोपलशिलादयः ।
षट्त्रिंशद्धरणीभेदा दर्शिता जिनपुंगवैः ॥ १५५ ॥
करका महिकाविन्दुहिमावश्यायसीकराः ।
शुद्धं घनोदकं तोयं तोयकायास्तनूभृतः ॥ १५६ ॥
अंगारो मुर्मुरो ज्वालाः स्फुलिंगशुद्धपावकाः ।
अर्चिरग्न्यादयो ज्ञेया बहुधावन्हिकायिकाः ॥ १५७ ॥
घनो महांस्तनुर्वात्या गुंजा[1] मण्डलिरुत्कलिः ।
प्रभंजनादयः प्रोक्ता विचित्रा वातकायिकाः ॥ १५८ ॥
मूलाग्रविष्टपस्कन्धग्रान्थिबीजादिरोहिणः ।
सम्मूर्च्छिनो मताश्चित्रा वनस्पतिशरीरिणः ॥ १५९ ॥
त्रसा द्वित्रिचतुःपंचहृषीका भवभागिनः ।
विकलासंज्ञिसंज्ञ्याख्यास्त्रसप्रकृतियंत्रिताः ॥ १६० ॥
त्रसनाड्याबहिः सन्ति नाङ्गिनस्त्रसकायिकाः ।
उपपादं गतांस्त्यक्त्वा देहिनो मारणान्तिकान्[2] ॥ १६१ ॥
प्रत्येककायिका देवाः श्वाभ्राः केवलिनोर्द्वयम् ।
आहारकधरातोयपावकानिलकायिकाः ॥ १६२ ॥
निगोतैर्बादरैः सूक्ष्मैरेते सन्त्यप्रतिष्ठिताः ।
पंचाक्षा विकला वृक्षा जीवाःशेषाःप्रतिष्ठिताः ॥ १६३ ॥ युग्मम्

---

१. घटादिमध्ये शब्दविशेषो गुंजा । २ केवलिसमुद्घातगतांश्च ।

ध्यानेन नाशितो येषां कायबन्धः कृशानुना ।
हेमाश्मनामिवाशेषो मलस्ते सन्त्यकायिकाः ॥ १६४ ॥

---

आत्मनो वीर्यविघ्नस्य क्षयोपशमने सति ।
यः प्रदेशपरिस्पंदः स योगो गदितास्त्रिधा ॥ १६५ ॥
प्रत्येकं वाङ्मनोयोगौ सत्यासत्यद्वयाद्वयैः ।
चतुर्धा कथितः प्राज्ञैः काययोगस्तु सप्तधा ॥ १६६ ॥
सत्यं मनो यथावस्तु प्रवृत्तं परथा मृषा ।
द्वये सत्यमृषा ज्ञेयमसत्यसत्यमृषाऽद्वये ॥ १६७ ॥
यथेति मनसो योगश्चतुर्धा प्रतिपादितः ।
वाचिकोऽपि तथा ज्ञेयो योगनिग्रहणोद्यतैः ॥ १६८ ॥
जनान्त सम्मति न्यास नाम रूप प्रतीतिषु ।
सत्यं संभावने भाव्ये (वे) व्यवहारोपमानयोः ॥ १६९ ॥
इत्थं सत्यवचो योगो दशधातोऽन्यथा मृषा ।
द्वाभ्यां सत्यमृषा ताभ्यां युक्तोऽसत्यमृषान्यथा ॥ १७० ॥
वागसत्यमृषा ज्ञेया विकलाक्षशरीरिणाम् ।
योगिनां संज्ञिनां चैषा याचनामंत्रणादिका ॥ १७१ ॥

---

१ भत्तं देवी चंदप्पहपडिमा तहय होदि जिणदत्तो ।
सेदो दिग्घो रज्झदि कूरोत्तिय जं हवेवयणं ॥ गो.सा.२२३ ॥
सक्को जम्बूदीवं पल्लट्टदि पापवज्जवयणं च ।
पल्लोवमं च कमसो जणपदसच्चादि दिट्ठंता ॥ २२४ ॥

२ आमंतणि आणवणी याचणिया पुच्छणी य पण्णवणी ।
पच्चक्खाणी संसयवयणी इच्छाणुलोमा य ॥ २२५ ॥
णवमी अणक्खरगदा असच्चमोसा हवंतिभासाओ ।
सोदारणं जम्हावत्तावत्तंस संजणया ॥ २२६ ॥

उदरे यो भवः स्थूले यस्योदारं प्रयोजनं ।
औदारिकोऽस्त्यसौ कायो मिश्रोऽपर्याप्त इष्यते ॥ १७२ ॥
विक्रियायां भवः कायो विक्रिया वा प्रयोजनं ।
यस्य वैक्रियिको ज्ञेयो मिश्रोऽपूर्णः स कथ्यते ॥ १७३ ॥
एकानेकलघुस्थूलशरीराविविधक्रिया ।
विक्रिया कथिता प्राज्ञैः सुरश्वाभ्रादिगोचरा ॥ १७४ ॥
अर्थानाहरते सूक्ष्मान् गत्वा केवलिनोऽन्तिकम् ।
संशये सति लब्धर्द्धेरसंयमजिहासया ॥ १७५ ॥
यः प्रमत्तस्य मूर्धोत्थो धवलो धातुवर्जितः ।
अन्तर्मुहूर्तस्थितिकः सर्वव्याघातविच्युतः ॥ १७६ ॥
पवित्रोत्तमसंस्थानो हस्तमात्रोऽनघद्युतिः ।
आहारकः स बोद्धव्यो मिश्रोऽपर्याप्त उच्यते ॥ १७७ ॥
कर्मैव कार्मणः कायः कर्मणां वा कदम्बकं ।
एकद्वित्रिक्षणानेष विग्रहर्तौ[1] प्रवर्तते ॥ १७८ ॥
तैजसेन शरीरेण बध्यते न न जीर्यते ।
न चोपभुज्यते किंचिद्यतो योगोऽस्य नास्त्यतः ॥ १७९ ॥
अकायाः सन्ति निर्मुक्ताः शुभाशुभप्रवर्तिनः ।
सप्तधा काययोगेन भवातीता निरास्रवाः ॥ १८० ॥
स्थूला विकुर्वते पूर्णास्तेजःपवनकायिकाः ।
पंचाक्षाश्वतनूभाजां परेषां नास्ति विक्रिया ॥ १८१ ॥
विग्रहर्तौ समस्तानां कायौ तैजसकार्मणौ ।
युक्तौ वैक्रियिकेनेमौ स्वर्गश्वभ्रनिवासिषु ॥ १८२ ॥

---

१ ऋतुशब्दः गतौ प्रवर्तते ।

औदारिके[1]न तिर्यक्षु नृणामाहारकेन[2] च ।
सहाहारकयोगेन जातु वैक्रियिकोऽस्ति नो ॥ १८३ ॥
वक्रतौ[3] सकला[4]ऽङ्गा देवश्वाभ्रास्त्रिविग्रहाः[5] ।
त्रिकाया मर्त्य[6]तिर्यञ्चश्चतुःकाया च केचन ॥ १८४ ॥
द्वयोस्त्रयोदशैकत्र दशान्यत्र त्रयोदश ।
नवैकादश ते षट्सु नवातः सप्त योगिनि ॥ १८५ ॥
१३।१३।१०।१३।९।११।९।९।९।९।९।९।७।०।

---

नोकषायविशेषाणामुदये त्रिविधोऽङ्गिनाम् ।
स्त्रीपुंनपुंसकाभिख्यो वेदो मूढत्वकारकः ॥ १८६ ॥
वेदोदीरणया जीवः सुषुप्तमनुजोपमः ।
कृत्याकृत्यविचाराणां जायते करणाक्षमः ॥ १८७ ॥
वेदकर्मोदयोत्पन्नो भाववेदस्त्रिधास्मृतः ।
नामकर्मोदयोत्पन्नो द्रव्यवेदोऽपि च त्रिधा ॥ १८८ ॥
जीवस्वभावसंमोहो भाववेदोऽभिधीयते ।
योनिर्लिंगादिको दक्षैर्द्रव्यवेदः शरीरिणाम् ॥ १८९ ॥
योऽभिलाषः स्त्रियाः पुंसि पुरुषस्य च यः स्त्रियाम् ।
स्त्रीपुंसयोश्च संढस्य भाववेदोऽस्ति स त्रिधा ॥ १९० ॥
नान्तर्मौहूर्तिका वेदास्ततः सन्ति कषायवत् ।
आजन्ममृत्युतस्तेषामुदयो दृश्यते यतः ॥ १९१ ॥
स्त्रीपुंनपुंसका जीवाः सदृशा द्रव्यभावतः ।
जायन्ते विसदृक्षाश्च कर्मपाकनियन्त्रिताः ॥ १९२ ॥

---

१—२ युक्तौ इमौ तैजसकार्मणौ स्त इति सम्बन्धः । ३ विग्रहगतौ । ४ विग्रहगतौ सर्वेजीवास्तैजसकार्मणकायाः । ५ त्रिशरीराः । ६ मनुष्याः ।

या स्त्री द्रव्येण, भावेन साऽस्ति स्त्री ना नपुंसकः ।
पुमान् द्रव्येण, भावेन पुमान्नारी नपुंसकः ॥ १९३ ॥
संढो द्रव्येण, भावेन संढो नारी नरो मतः ।
इत्येवं नवधा वेदो द्रव्यभावविभेदतः ॥ १९४ ॥
स्तनयोनिमती नारी पुमान् सश्मश्रुमेहनः ।
न स्त्री न पुरुषः पापो द्वयरूपो नपुंसकः ॥ १९५ ॥
श्रोणिमार्दवस्त्रस्तत्वं मुग्धत्वक्लीबतास्तनाः ।
पुंस्कामेन समं सप्त लिंगानि स्त्रैणसूचने ॥ १९६ ॥
खरत्वमेहनस्ताब्ध्य सौंडीर्यस्मश्रुधृष्टताः ।
स्त्रीकामेन समं सप्त लिंगानि पौंस्त्रवेदने ॥ १९७ ॥
यानि स्त्रीपुंसलिंगानि पूर्वाणीति चतुर्दश ।
शक्तानि तानि मिश्राणि षंढभावनिवेदने[१] ॥ १९८ ॥
गर्भः स्त्यायति यस्यां या दोषैश्छादयति स्वयं ।
नराभिलाषिणी नित्यं या सेह स्त्री निरुच्यते ॥ १९९ ॥
कुरुते पुरुकर्माणि गर्भं रोपयते स्त्रियां ।
यतो भजति राभस्यं ज्ञेयः सद्भिस्ततः पुमान् ॥ २०० ॥
सुष्ठु क्लिष्टमनोवृत्तिद्वयाकांक्षी नपुंसकः ।
नरप्रजावतीरूपो दुःसहाधिकवेदनः ॥ २०१ ॥
करीषजेन तार्णेन पावकेनेष्टकेन च ।
समतो वेदतोऽपेताः सन्त्यवेदा गतव्यथाः ॥ २०२ ॥

---

ये चारित्रपरीणामं कषन्ति शिवकारणं ।
क्रुन्मानवंचनालोभास्ते कषायाश्चतुर्विधाः ॥ २०३ ॥

---

१ क पुस्तकेनास्त्यम् श्लोकः ।

सन्त्यनन्तानुबन्ध्याख्याः अप्रत्याख्याननामकाः ।
ते प्रत्याख्यानसंज्ञाकाः क्रमात्संज्वलनाभिधाः ॥ २०४ ॥
तैराद्यैर्दृष्टिचारित्रे द्वितीयैर्देशसंयमः ।
तृतीयैः संयमस्तुर्यैर्यथाख्यातश्च हन्यते ॥ २०५ ॥
कोपतः समतो ग्रावाभूरेणूदकराजिभिः ।
गतिं चतुर्विधां यान्ति श्वभ्रतिर्यग्नृनाकिनाम् ॥ २०६ ॥
अश्मस्तंभास्थिदार्वार्द्रवल्लरीसमतो गतिं ।
मानतो गच्छति श्वभ्रतिर्यङ्मर्त्यदिवौकसाम् ॥ २०७ ॥
तुल्यया वंशमूलाविशृङ्गगोमूत्रचामरैः ।
मायया नारकास्तिर्यङ् जायते मानवोऽमरः ॥ २०८ ॥
कृमिनीलीहरिद्राङ्गमलरागसमानतः ।
लोभतो जायते श्वभ्रस्तैरश्चो मानुषः सुरः ॥ २०९ ॥
क्रुद्धः श्वभ्रेषु तिर्यक्षु मायायाः प्रथमोदयः ।
जातस्य नृषु मानस्य लोभस्य स्वर्गवासिषु ॥ २१० ॥
आचार्या निगदन्त्यन्ये कोपादिप्रथमोदये ।
भ्रमतां भवकान्तारे नियमो नास्ति जन्मिनाम् ॥ २११ ॥
स्वान्यपीडाकरा निन्द्या बन्धासंयमहेतवः ।
कषायाः सन्ति नो येषां तेऽकषाया जिनोत्तमाः ॥ २१२ ॥

---

गुणपर्ययवद्द्रव्यं ध्रौव्योत्पादव्ययात्मकं ।
तत्वतो ज्ञायते येन तज्ज्ञानं कथ्यते जिनैः ॥ २१३ ॥
इन्द्रियानिन्द्रियैरर्थग्रहणं मननं मतिः ।
विकल्पा विविधास्तस्याः क्षयोपशमसंभवाः ॥ २१४ ॥
क्षिपेद्धृत्वेन्द्रियैः षड्भिश्चतुरोऽवग्रहादिकान् ।
व्यञ्जनावग्रहं तत्र मूलभंगं चतुर्विधं ॥ २१५ ॥

२४–२८–३२ ।
त्रयोऽपि राशयस्तावद्बह्वादिभिरसेतरैः ।
तैः सेतरैः पुनस्ताड्या मतिभेदावबुद्धये ॥ २१६ ॥
१४४।१६८।१९२।

ते त्रयो राशयः सेतरैर्बह्वादिभिर्द्वादशभिर्गुणिताः—
२८८।३३६–३८४ ।
मतिपूर्वं श्रुतं प्रोक्तं ह्यनेकद्वादशात्मकम् ।
शब्दाद् घटादि विज्ञानं वह्निज्ञानं च धूमतः ॥ २१७ ॥
मतिपूर्वं श्रुतं दक्षैरुपचारान्मतिर्मता ।
मतिपूर्वं ततः सर्वं श्रुतं ज्ञेयं विचक्षणैः ॥ २१८ ॥

घट इत्युक्ते घकाराकारटकाराकारविसर्जनीयविषयं मतिज्ञानं ततः पृथुबुध्नोदराद्याकारविषयं श्रुतज्ञानं ततो जलधारणादिविषयं श्रुतज्ञानम् । तथा धूमदर्शनं मतिज्ञानं ततोऽग्निविषयं विज्ञानं श्रुतज्ञानं ततोऽपि दाहपाकादिविषयं विज्ञानं श्रुतज्ञानमिति श्रुतात् श्रुतोत्पत्तेर्मतिपूर्वं श्रुतमेतल्लक्षणमव्यापीति चेत्, नैष दोषो मतेर्यच्छ्रुतज्ञानं तदपि मतिज्ञानमेव कार्येकारणोपचारात् अन्नं वै प्राणाः, आयुर्वैघृतमित्यादिवत् । ततो व्याप्येव लक्षणं ।
अवाच्यानामनन्तांशो वाच्या भावा मता जिनैः ।
तद्वत्तेषामनन्तांशो वाच्यानामागमे पुनः ॥ २१९ ॥
मूर्त्ताशेषपदार्थानां वेदको गद्यतेऽवधिः ।
स भवप्रत्ययः प्रोक्तो नारकेष्वमरेषु च[1] ॥ २२० ॥

---

१ च शब्दात्तीर्थकराणाञ्च ।

क्षयोपशमजः षोढा शेषाणां जन्मभागिनाम् ।
अधोगतबहुद्रव्यबोधनादवधिर्मतः ॥ २२१ ॥
अनुगोऽननुगः[1] शश्वदवस्थोऽनवस्थितः ।
मुनिभिर्वर्द्धमानोऽसौ हीयमानश्च कथ्यते ॥ २२२ ॥
सर्वाङ्गोत्थोऽवधिस्तीर्थकर्तृनारकनाकिनाम् ।
परेषां शंखराजीवस्वस्तिकाद्यङ्कचिन्हजः ॥ २२३ ॥
नन्द्यावर्तो ध्वजः पद्मः श्रीवत्सः कलशो हलम् ।
पावनं नरतिर्यक्षु नाभेरुपरि लक्षणं ॥ २२४ ॥
सरटो मर्कटो गोधा कंकः काको वकः खरः ।
अधस्ताल्लक्षणं नाभेर्विभंगस्य तु निन्दितम् ॥ २२५ ॥
क्षयोपशमयोगस्य तारतम्यव्यवस्थितेः ।
उत्पत्तिक्षेत्रमासाद्य जायते तारतम्यता ॥ २२६ ॥
योऽन्यदीयमनोजातरूपिद्रव्यावबोधकः[2] ।
स मनःपर्ययो द्वेधा विपुलर्जुमती मतः ॥ २२७ ॥
लब्ध्वान्यतमलब्धीनां संयतानां प्रजायते ।
मर्त्यक्षेत्रस्थितद्रव्यप्रकाशी स प्रकर्षतः ॥ २२८ ॥
साक्षात्कृताखिलद्रव्यपर्यायमविपर्ययम् ।
अनन्तं केवलज्ञानं कल्मषक्षयसंभवम् ॥ २२९ ॥
मतिश्रुतावधिज्ञानं मिथ्यात्वसमवायतः ।
विपरीतं त्रिधाज्ञेयं विपरीतार्थदर्शकम् ॥ २३० ॥
रूपादौ यद्विपर्यस्तं मत्यज्ञानं तदक्षजम् ।
धर्मरिक्तं श्रुताज्ञानं विज्ञेयं शब्दकारणम् ॥ २३१ ॥

---

१ ख पुस्तके "नानुगः" इति पाठः । २ क पुस्तके मनोयात इति पाठः ।

पर्याप्तस्यावधिज्ञानं मिथ्यात्वविषदूषितम् ।
विभंगं भण्यते सद्भिः क्षयोपशमसंभवम् ॥ २३२ ॥
उदये यद्विपर्यस्तं ज्ञानावरणकर्मणः ।
तदस्थास्नुतया नोक्तं मिथ्याज्ञानं सुदृष्टिषु ॥ २३३ ॥

---

कषायाः षोडश प्रोक्ता नोकषाया यतो नव ।
ईषद्भेदो न भेदोऽतः कषायाः पंचविंशतिः ॥ २३४ ॥
शामिकं शमतस्तेषां क्षायिकं क्षयतो मतम् ।
क्षयोपशमतो वृत्तं क्षायोपशमिकं पुनः ॥ २३५ ॥
द्वादशाद्यकषायाणामुदयस्य क्षये सति ।
यत्सत्त्वोपशमे तेषां चारित्रोदयघातिनाम् ॥ २३६ ॥
त्रयोदशकषायाणां परेषामुदये सति ।
चारित्रं जायते तत्स्यात् क्षायोपशमिकं यतेः ॥ २३७ ॥ युग्मम् ॥
व्रतदण्डकषायाक्षसमितीनां यथाक्रमम् ।
संयमो धारणं त्यागो निग्रहो विजयोऽवनम्[१] ॥ २३८ ॥
क्रियते यदभेदेन व्रतानामधिरोपणम् ।
कषायस्थूलतालीढः स सामायिकसंयमः ॥ २३९ ॥
व्रतानां भेदनं कृत्वा यदात्मन्यधिरोपणम् ।
शोधनं वा विलोपेनच्छेदोपस्थापनं मतं ॥ २४० ॥
सावद्यपरिहारेण प्राप्यते यः समाहितैः ।
व्रतगुप्तिसमित्याढ्यैः सः परीहारसंयमः ॥ २४१ ॥
वर्तते सूक्ष्मलोभे यः शमके क्षपके गुणे ।
स सूक्ष्मसांपरायाख्यः संयमः सूक्ष्मलोभतः ॥ २४२ ॥

---

१ रक्षणम् ।

चारित्रमोहनीयस्य प्रशमे प्रक्षयेऽपि वा ।
संयमोऽस्ति यथाख्यातो जन्मारण्यदवानलः ॥ २४३ ॥
चतुर्णां संयमावाद्यौ तृतीयोऽवादि पूर्वयोः ।
सूक्ष्मस्य सूक्ष्मलोभाद्दश्चतुर्णां पंचमस्ततः ॥ २४४ ॥
प्रथमाष्टकषायाणामुदयप्रलये सति ।
यः [1]सत्त्वोपशमे तेषामन्येषामुदये सति ॥ २४५ ॥
[2]चतुःस्थावरविध्वंसी दशधा[3] त्रसरक्षकः ।
सम्पद्यते परीणामः संयमासंयमोऽस्ति सः ॥२४६॥ युग्मम् ॥
अष्टौ स्पर्शा रसा पंच द्वौ गन्धौ वर्णपंचकं ।
[4]षड्जादयः स्वराः सप्त दुर्मनोऽक्षेष्वसंयमाः ॥ २४७ ॥
इत्यष्टाविंशतिः सन्ति चतुर्दशशरीरिषु ।
तेषामरक्षका जीवा ज्ञेया दक्षैरसंयताः ॥ २४८ ॥

इन्द्रियेष्वसंयमाः २८-जीवेषु १४ ।

---

रूपादीनां पदार्थानां सामान्यस्यावलोकनम् ।
चतुर्द्धा दर्शनं ज्ञेयं जीवसामान्यलक्षणम् ॥ २४९ ॥
प्रकाशश्चक्षुषोऽर्थानां चक्षुर्दर्शनमिष्यते ।
शेषाणां पुनरक्षाणामचक्षुर्दर्शनं जिनैः ॥ २५० ॥
साक्षाद्रूपिपदार्थानां सोऽवाद्यवधिदर्शनम् ।
मूर्त्तामूर्त्तपदार्थानामसौ केवलदर्शनम् ॥ २५१ ॥

---

१ ख पुस्तके " सत्तोपशमे " इतिपाठः । २ स्थावराणां चत्वारो जीवसमासाः, सूक्ष्मवादरपर्याप्तापर्याप्तभेदेन । ३ अवशिष्टदशजीवसमासाः । ४ षड्जं मयूरो वदाति, ऋषभं चातको वदेत् । अजा वदति गांधारं, कुंचो वदति मध्यमं ॥ १ ॥ पुष्पसाधारणाकाले पंचमं कोकिलो वदेत् । दर्दुरं धुवकं चैव निषादं वदते गजः ॥ २ ॥

मनः पर्ययविज्ञानं विशेषविषयं यतः ।
मतिपूर्वं श्रुतज्ञानं दर्शनं न ततस्तयोः ॥ २५२ ॥

---

प्रवृत्तिर्यौगिकी लेश्या कषायोदयरंजिता ।
भावतो द्रव्यतो देहच्छविः षोढोभयी मता ॥ २५३ ॥
कृष्णा नीला च कापोती पीता पद्मा सिता स्मृता ।
लेश्या षड्भिः सदा ताभिर्गृह्यते कर्म जन्मिभिः ॥ २५४ ॥
पृथ्वीकायेषु सा[1] षोढा शुक्ला तोयशरीरिषु ।
पीता पावककायेषु कापोती पवनांगिषु ॥ २५५ ॥
षोढा पादपकायेषु बादरेषु निवेदिताः ।
कापोती सूक्ष्मकायेषु सर्वापर्याप्तकेषु च ॥ २५६ ॥
सर्वेषां जन्मिनां शुक्ला लेश्या वक्रगतौ[2] स्मृता ।
शरीरं कार्मणं शुक्लं पीतं भवति तैजसम् ॥ २५७ ॥
औदारिकं नृतिर्यक्षु सषट्लेश्यं कलेवरम् ।
पीता वैक्रियिके पद्मा शुक्ला लेश्या सुधाशिनाम् ॥ २५८ ॥
[3]मूलनिर्वर्त्तने पीता देवीनां तु कलेवरे ।
श्वाभ्राणां कथिता कृष्णा सा षोढोत्तरकालिकी ॥ २५९ ॥
षट्लेश्यांगा मतेऽन्येषां भौमज्योतिष्कभावनाः ।
गोमूत्रमुद्गकापोतवर्णाङ्गाः पवनांगिनः ॥ २६० ॥

इत्युक्ता द्रव्यलेश्या ।

भावलेश्योच्यते,——

---

१ द्रव्यलेश्या । २ विग्रहगतौ । ३ शरीरे देवीनां पीतलेश्या भवति विकुर्वणाकाले बहुविधा द्रव्यतः । नारकिनां विकुर्वणाकाले सा कृष्णलेश्या षड्विधा जायते परं स्वभावेन कृष्णालेश्या द्रव्यतो न तु भावतो भवति ॥

योगाविरतिमिथ्यात्वकषायजनिताङ्गिनाम् ।
संस्कारो भावलेश्यास्ति कल्मषास्रवकारणम् ॥ २६१ ॥
कापोती कथिता तीव्रो नीला तीव्रतरो जिनैः ।
कृष्णा तीव्रतमो लेश्यापरिणामः शरीरिणाम् ॥ २६२ ॥
पीता निवेदिता मंदः पद्मा मंदतरो बुधैः ।
शुक्ला मंदतमस्तासां वृद्धिः षट्स्थानयायिनी ॥ २६३ ॥
निर्मूलस्कंधयोश्छेदे भावा शाखोपशाखयोः ।
उच्चये पतितादाने भावलेश्या फलार्थिनाम् ॥ २६४ ॥
[1]षट् षट् चतुर्षु विज्ञेयास्तिस्रस्तिस्रः शुभास्त्रिषु ।
शुक्ला गुणेषु षट्स्वेका लेश्या निर्लेश्यमन्तिमम् ॥ २६५ ॥

इति मिथ्यादृष्ट्यादिषु लेश्याः ।

[2]कर्मभूमिष्वपूर्णानामाद्यास्तिस्रो विचक्षणैः ।
जघन्यावादि कापोती लेश्या क्षायिकदृष्टिषु ॥ २६६ ॥
षट् नृतिर्यक्षु तिस्रोऽन्त्याः संत्यसंख्येयजीविषु ।
एकाक्षविकलासंज्ञिष्वाद्यास्तिस्रो भवन्ति ताः ॥ २६७ ॥
[3]द्विः कापोताथ कापोतानीले नीला च मध्यमा ।
नीलाकृष्णे च कृष्णातिकृष्णा रत्नप्रभादिषु ॥ २६८ ॥

---

१ लेश्यावर्णनार्थं संदृष्टिः ६।६।६।६।३।३।३।१।१।१।१।१।१।०।

२ कर्मभूमिषु अपर्याप्तेषु क्षायिकसम्यग्दृष्टिषु जघन्यकापोतलेश्या भवति ।

३ अस्य संदृष्टिरित्थं-

| | | | | | | |
|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० |
| ३ | ३ | ३ | २ | २ | १ | १ |
| उ | म | २ | म | १ | म | ज |
| | | उ | | उ | | |
| | | ज | | ज | | |

नरकस्य शून्यसंज्ञा, प्रथमनरके उत्कृष्टा कापोता द्वितीये मध्यमा ।

रत्नप्रभायां जघन्या कापोता, शर्करायां मध्यमा कापोता, वालुकायामुत्कृष्टा कापोता नीला जघन्येत्येवं त्रिकं योज्यम् ।

अपूर्णेष्वादिमास्तिस्रो जघन्या भावनादिषु ।
त्रिषु पूर्णेषु पीतैका लेश्याऽवाचि सुधाशिषु ॥ २६९ ॥
सौधर्मैशानयोः पीता पीतापद्मे द्वयोस्ततः ।
कल्पेषु षट्स्वतः पद्मा पद्माशुक्ले द्वयोस्ततः ॥ २७० ॥
आनतादिषु शुक्लाऽतस्त्रयोदशसु मध्यमा ।
चतुर्दशसु सोत्कृष्टा विज्ञेयाऽनुदिशादिषु ॥ २७१ ॥

आद्ये निकायत्रये देवानामपर्याप्तानामाद्यास्तिस्रः पर्याप्तानामेका जघन्या पीतेति चतस्रो लेश्याः सौधर्मैशानयोर्मध्यमा पीता, ततो द्वयोरुत्कृष्टा पीता, जघन्या पद्मेत्येवं त्रिकं त्रिकं योज्यमिति भावः ।

लेश्याः समाप्ताः ।

---

अथ लेश्याकर्मोच्यते,—

रागद्वेषमदाविष्टो दुर्ग्रहो दुष्टमानसः ।
क्रोधमानादिभिस्तीव्रैर्ग्रस्तोऽनंतानुबंधिभिः ॥ २७२ ॥

---

१—भवनत्रिषु—संदृष्टिरित्थम्—

| |
|---|
| ० |
| ३ |
| ज |

| भवन ३ | २ | २ | ६ | २ | १३ | | |
|---|---|---|---|---|---|---|---|
| = = = | ० | ० | ० ० ० | ० | | | ० ० ० ० १४ |
| ० ० ० | ० | ० | ० ० ० | ० | ० ० | ० ० ० ० ० ० ० ० ० ० | ० ० ० ० ० ० |
| ले | ले | ४ | ले | ५ | ० ० | | ० ० ० ० ० ६ |
| ४ ज | ४ | ५ | म ५ | ले | ६ म | | उ |
| | म | | | ६ | | | |
| | उ ज | | | उ ज | | | |

भवनवासिव्यन्तरज्योतिष्केषु चतुर्थी पीतलेश्या जघन्या भवति ।

निर्दयो निरनुक्रोशो मद्यमांसादिलंपटः ।
सर्वदा कदनासक्तः कृष्णलेश्यो मतो जनः ॥ २७३ ॥
कोपी मानी मायी लोभी रागी द्वेषी मोही शोकी ।
हिंस्रः क्रूरश्चंडश्चौरो मूर्खः स्तब्धः स्पर्द्धाकारी ॥ २७४ ॥
निद्रालुः कामुको मंदः कृत्याकृत्यविचारकः ।
महामूर्च्छो महारंभो नीललेश्यो निगद्यते ॥ २७५ ॥
शोकभीमत्सरासूयापरनिन्दापरायणः ।
प्रशंसति सदात्मानं स्तूयमानः प्रहृष्यति ॥ २७६ ॥
वृद्धिहानी न जानाति न मूढः स्वपरान्तरम् ।
अहंकारग्रहग्रस्तः समस्तां कुरुते क्रियाम् ॥ २७७ ॥
श्लाघिनो नितरां दत्ते रणे मर्तुमपीहते ।
परकीययशोध्वंसी युक्तः कापोतलेश्यया ॥ २७८ ॥
सम्यग्दृष्टिरविद्विष्टो हिताहितविवेचकः ।
वदान्यः सदयो दक्षस्तेजोलेश्यो महामनाः ॥ २७९ ॥
शुचिर्दानरतो भद्रो विनीतात्मा प्रियंवदः ।
साधुपूजोद्यतः शान्तः पद्मलेश्योऽनघक्रियः ॥ २८० ॥
निर्निदानोऽनहंकारः पक्षपातोज्झितोऽशठः ।
रागद्वेषपराचीनः शुक्ललेश्यः स्थिराशयः ॥ २८१ ॥
निरस्तोभयलेश्याका नित्यसौख्यपरंपराः ।
संसारप्रक्रमातीताः सिद्धाः संति निरापदः ॥ २८२ ॥

---

१ पश्चात्तापरहितः । २ कुत्सिताश्नमशनं तस्मिन्नासक्तः । ३ मूढः बुद्धिहीनो वा । ४ भयं । ५ ईर्षाकरणं । ६ अतिशयेन दानं ददातीति वदान्यः । ७ क ख पुस्तकयोः "महात्मनः" इतिपाठः ।

ते भव्या भणिता जीवाः सिद्धियोग्या भवन्ति ये ।
विशुद्धेर्नियमस्तेषु[1] सुवर्णाश्मस्विवास्ति[2] नो ॥ २८३ ॥
संख्यातकमसंख्यातं कालं भ्रान्त्वाप्यनंतकम् ।
भव्याः सेत्स्यंति नाभव्याः कदाचन शरीरिणः ॥ २८४ ॥
भव्याभव्यत्वनिर्मुक्ताः सर्वद्वन्द्ववहिर्भवाः ।
पवित्राष्टगुणैश्वर्याः सिद्धाः संति निरामयाः ॥ २८५ ॥
पूर्णपंचेन्द्रियः संज्ञी लब्धकालादिलब्धिकः ।
सम्यक्त्वग्रहणे योग्यो भव्यो भवति शुद्धधीः ॥ २८६ ॥

भव्यः कर्माविष्टोऽर्द्धपुद्गलपरिवर्त्तपरिमाणकालेऽवशिष्टे प्रथमसम्यक्त्वयोग्यो भवतीति काललब्धिः । आदिशब्देन वेदनाभिभवजातिस्मरणजिनेन्द्रार्चादयो गृह्यन्ते ।

क्षायोपशमिकीं लब्धिं शौद्धीं देशनिकीं भवी[3] ।
प्रायोगिकीं समासद्य कुरुते करणत्रयम् ॥ २८७ ॥

प्रागुपात्तकर्मपटलानुभागस्पर्द्धकानां[4] शुद्धियोगेन प्रतिसमयानंतगुणहीनानामुदीरणा क्षायोपशमिकी लब्धिः ।

क्षयोपशमविशिष्टोदीर्णानुभागस्पर्द्धकप्रभवः परिणामः सातादिकर्मबन्धनिमित्तः सावद्यकर्मबन्धविरुद्धः शौद्धी लब्धिः ।

यथार्थतत्वोपदेशतदुपदेशकाचार्याद्युपलब्धिरुपदिष्टार्थग्रहणधारणाविचारणाशक्तिर्वा देशनिकी लब्धिः ।

---

१ भव्येषु । २ यथा धातुपाषाणेषु स्वर्णत्वं व्यक्तं भवति, क्वापि न भवत्यपि, परं तेषु स्वर्णत्वमस्ति यदि साधनिका मिलति तदा व्यक्तं भवति नो चेन्न, तथा भव्येष्वपि विशुद्धेर्नियमो नास्ति । ३ जीवः । ४ उदयस्पर्द्धकानां ।

अन्तः कोटीकोटीसागरोपमस्थितिकेषु कर्मसु वंधमापद्यमानेषु विशुद्धिपरिणामयोगेनसत्कर्मसु संख्येयसागरोपमसहस्रोनायामन्तःकोटीकोटीसागरोपमस्थितौ स्थापितेषु आद्यसम्यक्त्वयोग्यता भवतीति प्रायोगिकी लब्धिः ।

अथाप्रवृत्तकापूर्वानिवृत्तिकरणत्रयम् ।
विधाय क्रमतो भव्यः सम्यक्त्वं प्रतिपद्यते ॥ २८८ ॥

भव्योऽनादिमिथ्यादृष्टिः [१]षड्विंशतिमोहप्रकृतिसत्कर्मकः[२] [३]सादिमिथ्यादृष्टिर्वा षड्विंशतिमोहप्रकृतिसत्कर्मकः सप्तविंशति मोहप्रकृतिसत्कर्मको वा अष्टाविंशतिमोहप्रकृतिसत्कर्मको वा प्रथमसम्यक्त्वमादातुकामः [४]शुभपरिणामाभिमुखोऽन्तमुहूर्त्तमनंतगुणवृद्ध्या वर्द्धमानविशुद्धिश्चतुर्षु मनोयोगेष्वन्यतमेन मनोयोगेन चतुर्षु वाग्योगेष्वन्यतमेन वाग्योगेनौदारिकवैक्रियिककाययोगयोरन्यतरेण काययोगेन त्रिषु वेदेष्वन्यतमेन वेदेनालीढो निरस्तसंक्लेशो [५]हीयमानान्यतमकषायः [६]साकारोपयोगो वर्द्धमानशुभपरिणामयोगेन सर्वप्रकृतीनां स्थितिं ह्रासयन्नशुभप्रकृतीनामनुभागबंधमपसारयन्[७] शुभप्रकृतीनां रसं संवर्द्धयन् त्रीणि करणानि प्रत्येकमंतर्मुहूर्त्तकालानि कर्त्तुमुपक्रमते । [८]तत्रान्तःकोटीकोटीस्थितिकानि कर्माणि कृत्वा अथाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरणं च क्रमेण प्रविशति

---

१ सम्यङ्मिथ्यात्वसम्यक्प्रकृतिमिथ्यात्वं विना २ सत्ताकर्माणि यस्य ३ यदा चतुर्थात्प्रथमे आगच्छति तदा । सम्यक्त्वमोहनीयं मिथ्यात्वमोहनीयं च मिथ्यात्व एवान्तर्गर्भिते स्तः मिथ्यात्वत्रयं गोलकरूपं वर्त्तते ४ शुभपरिणामेन सन्मुखः ५ हीयमाना अन्यतमा अनंतानुबंधिनः कषाया यस्य ६ ज्ञानोपयोगः ७ भिन्नं कुर्वन् ८ करणे अन्तर्मुहूर्त्तकाले वा ।

तत्र सर्वकरणानां प्रथमसमये स्वल्पा शुद्धिः । ततः प्रति-समयमन्तर्मुहूर्त्तसमाप्तेरनंतगुणा द्रष्टव्या । सर्वाणि करणान्यन्वर्थानि, —— अथ प्रागप्रवृत्ताः कदाचिदीदृशाः करणाः परिणामा यत्र तदथाप्रवृत्तकरणं । अधःस्थैरुपरिस्थाः समानाः प्रवृत्ताः करणाः यत्र तदधःप्रवृत्तकरणमिति वान्वर्थसंज्ञा । अपूर्वाः समये समये अन्ये शुद्धतराः करणाः यत्र तदपूर्वकरणं । एकसमयस्थानामनिवृत्तयोऽभिन्नाः करणा यत्र तदनिवृत्तिकरणं । सर्वेषु करणेषु नानाजीवानामसंख्येयलोकप्रमाणाः परिणामा द्रष्टव्याः । तत्राथाप्रवृत्तकरणे स्थिति-खंडनानुभागखंडनगुणश्रेणिसंक्रमा न संति परमनंतगुणवृद्ध्या विशुद्ध्या अशुभप्रकृतीरनंतगुणानुभागहीना बध्नाति शुभ-प्रकृतीरनंतगुणरसवृद्धाः, स्थितिमपि पल्योपमासंख्येयभाग-हीनां करोति । अपूर्वकरणानिवृत्तिकरणयोः स्थितिखंडनादयः संति । क्रमेणाशुभप्रकृतीनामनुभागबंधोऽनंतगुणहान्या शुभ-प्रकृतीनां चानंतगुणवृद्ध्या वर्त्तते । तत्रानिवृत्तिकरणस्या-संख्येयेषु भागेषु गतेष्वान्तरकरणमारभते, येन दर्शनमोहनीयं निहत्य चरमसमये त्रिधा करोति शुद्धाशुद्धमिश्रभेदेन, सम्यक्त्वं, मिथ्यात्वं, सम्यङ्मिथ्यात्वं चेति ।

प्रशमय्य ततो भव्यः सहानंतानुबंधिभिः ।
ताः मोहप्रकृतीस्तिस्रो याति सम्यक्त्वमादिमम् ॥ २८९ ॥

---

१ प्रथमसमयात् । २ अन्तर्मुहूर्त्तकालसमाप्तेर्यावत् समयं समयं प्रति अनंतगुणा ज्ञातव्या । ३ यत्र स्थाने उपरिस्था अनादिकालस्य रागद्वेषादि-परिणामा अधःस्थैरात्मानुयायिभिर्भव्यपरिणामैः सह समाना भवंति तदधः प्रवृत्तिकरणं । ४ भेदरहिताः किन्त्वेकरूपाः समानाः ।

संवेगप्रशमास्तिक्यं[1]दयादिव्यक्तलक्षणम् ।
तत्सर्वदुःखविध्वंसि त्यक्तशंकादिदूषणम् ॥ २८९ ॥
निसर्गाधिगमाभ्यां यच्छ्रद्धानं तत्वगोचरम् ।
अज्ञानच्छेदकं त्रेधा सम्यक्त्वमिदमुच्यते ॥ २९० ॥
शमे सम्यक्त्वमिथ्यात्वमिश्रानंतानुबंधिनाम् ।
प्रादुर्भवति सम्यक्त्वं शमिकं क्षायिकं क्षये ॥ २९१ ॥
[2]क्षीणोदयेषु मिथ्यात्वमिश्रानंतानुबन्धिषु ।
लब्धोदये च सम्यक्त्वे क्षायोपशमिकं भवेत् ॥ २९२ ॥
रूपैर्भयंकरैर्वाक्यैर्हेतुदृष्टान्तदर्शिभिः ।
जातु क्षायिकसम्यक्त्वो न क्षुभ्यति विनिश्चलः ॥ २९३ ॥
नृगतौ दृष्टिमोहस्य मर्त्यः प्रारभते क्षयम् ।
निर्वर्त्तते [3]समस्तासु कर्मभूमिभवः स्फुटम् ॥ २९४ ॥
क्षयस्यारंभको यत्र[4] परं तस्माद्भव[5]त्रयम् ।
[6]अनातिक्रम्य निर्वाति क्षीणदर्शनमोहतः ॥ २९५ ॥
शमको दृष्टिमोहस्य ज्ञेयो गतिचतुष्टये ।
संज्ञी पंचेन्द्रियः पूर्णः सान्तरः शुद्धमानसः ॥ २९६ ॥
निकायत्रितये पूर्वे श्वभ्रभूमिषु षट्स्वधः ।
वनितासु समस्तासु सम्यग्दृष्टिर्न जायते ॥ २९७ ॥
[7]चतुर्ष्वसंयताद्येषु सम्यक्त्वत्रयमिष्यते ।
वेदकेन विनान्येषु क्षायिकं त्रितये परे ॥ २९८ ॥

---

१ जीवादिपदार्था यथा जिनैरुक्तास्तथैव संतीत्यास्तिक्यं २ उदयरहितेषु, उपशमं गतेषु, परं पुनरुदयं नागमिष्यंति इति क्षयरूपेषु च । ३ चतुर्गतिषु ४ भवे ५ भवात् ६ अनुल्लंघ्य ७ अमुमेवार्थं संदृष्टिद्वारेण सूचयति—०।०।०।३।३।३।३।२।२।२।२।१।१।१।

नृभोगभूमितिर्यक्षु सौधर्मादिषु नाकिषु ।
आद्यायां श्वभ्रभूमौ च सम्यक्त्वत्रयमिष्यते ॥ २९९ ॥
[1]शेषत्रिदशतिर्यक्षु षट्स्वधः श्वभ्रभूमिषु ।
पर्याप्तेषु द्वयं ज्ञेयं क्षायिकेन विनांगिषु ॥ ३०० ॥
आयुश्चतुष्कबंधेऽपि दृष्टिलाभोऽस्ति निश्चितम् ।
देवायुष्ये च बद्धेऽङ्गी स्वीकरोति व्रतद्वयम् ॥ ३०१ ॥
आद्यसम्यक्त्वतो भ्रष्टः पाकेऽनंतानुबंधिनाम् ।
मिथ्यादर्शनमप्राप्तः सासनः कथ्यतेतराम् ॥ ३०२ ॥
सम्यङ्मिथ्यात्वपाकेन परिणामो विमिश्रितः ।
विषमिश्रामृतास्वादः सम्यङ्मिथ्यात्वमुच्यते ॥ ३०३ ॥
मिथ्यात्वोदयतस्त्रेधा मिथ्यात्वं जायतेऽङ्गिनाम् ।
तच्च सांशयिकं ज्ञेयं गृहीतमगृहीतकम् ॥ ३०४ ॥
मिथ्यात्वभूषितस्तत्त्वं नादिष्टं[2] रोचते कुधीः ।
सदादिष्टमनादिष्टमतत्त्वं रोचते पुनः ॥ ३०५ ॥
जिनेन्द्रभाषितं तत्त्वं किमु सत्यमुतान्यथा ।
इति द्वयाश्रया दृष्टिः प्रोक्ता सांशयिकी जिनैः ॥ ३०६ ॥
परोपदेशतो जातं तत्त्वार्थानामरोचनम् ।
गृहीतमुच्यते सद्भिर्मिथ्यादर्शनमङ्गिनाम् ॥ ३०७ ॥
भेदाः क्रियाऽक्रियावादिविनयाज्ञानवादिनाम् ।
गृहीतासत्यदृष्टीनां त्रिषष्टित्रिशतप्रमाः ॥ ३०८ ॥
अङ्कतो ३६३
तत्राशीतिशतं ज्ञेयमशीतिश्चतुरुत्तरा ।
द्वात्रिंशत्सप्तषष्टिश्च तेषां भेदाः यथाक्रमम् ॥ ३०९ ॥

---

१ भवनवासिनो व्यंतरा ज्योतिष्काश्च । २ आदिष्टं कथितम् ।

तत्र क्रियावादिनामास्तिकानां कोक्षुल्लकंठेविद्धिकौशिक-हरिश्मयश्रुमांथविकरोमशहारितमुंडाश्वलयनादयो अशीति-शतप्रमाणभेदाः । तेषामानयनमुच्यते स्वभावनियतिकाले-श्वरात्मकर्तृत्वानां पंचानामधो जीवादिपदार्थानां नवानामधः स्वतः परतो नित्यत्वानित्यत्वानि च चत्वारि संस्थाप्य, अस्ति स्वतो जीवः स्वभावतः १ अस्ति परतो जीवः स्वभा-वतः २ अस्ति नित्यो जीवः स्वभावतः ३ अस्त्यनित्यो जीवः स्वभावतः ४ इत्याद्युच्चारणया राशित्रयस्य परस्पर-वधेन भेदा लभ्यन्ते १८० तेषामित्थं संदृष्टिः—

| स्व. | नियति | | काल | | ईश्वर | | आत्म | |
|---|---|---|---|---|---|---|---|---|
| जी. | अ. | आ. | बं. | सं. | नि. | मो. | पु. | प. |
| स्व. | | प. | | नित्य | | अनित्य | | |

स्वभावादीनाह,—

कः स्वभावमपहाय वक्रतां कंटकेषु विहगेषु चित्रताम् ।
मत्स्यकेषु कुरुते पयोगतिं पंकजेषु खरदंडतां परः ॥ ३१० ॥

यदा यथा यत्र यतोऽस्ति येन यत्,
तदा तथा तत्र ततोऽस्ति तेन तत् ।
स्फुटं नियत्येह नियंत्र्यमाणं,
परो न शक्तः किमपीह कर्तुम् ॥ ३११ ॥

सुप्तेषु जागर्त्ति सदैव कालः,
कालः प्रजाः संहरते समस्ताः ।
भूतानि कालः पचतीति मूढाः
कालस्य कर्तृत्वमुदाहरन्ति ॥ ३१२ ॥

अज्ञः शरीरी नरकेऽथ नाके,
प्रेर्यमाणो व्रजतीश्वरेण ।
स्वस्याक्षमो दुःखसुखे विधातु-
मिदं वदन्तीश्वरवादिनोऽन्ये ॥ ३१३ ॥
एको देवः सर्वभूतेषु लीनो,
नित्यो व्यापी सर्वकार्याणि कर्त्ता ।
आत्मा मूर्त्तः सर्वभूतस्वरूपं,
साक्षाज्ज्ञाता निर्गुणः शुद्धरूपः ॥ ३१४ ॥

अक्रियावादिनां नास्तिकानां मरीचिकुमारोलूककपिल-गार्ग्यव्याघ्रभूतिवाग्वलिमाठरमौद्गिल्यादयश्चतुरशीतिप्रमा भेदास्तेषामानयनमाह,——स्वभावादीनां पंचानामधः पुण्य-पापानिष्टेः सप्तानां जीवादीनामधः स्वपरद्वयं निक्षिप्य नास्ति स्वतो जीवः स्वभावतः १ नास्ति परतो जीवः स्वभावतः २ इत्याद्युच्चारणे परस्पराभ्यस्ते वा लब्धा भेदाः सप्ततिः ७० । तेषां संदृष्टिरित्थम्

| स्व. | नियति. | काल. | ईश्व. | आत्म. | | |
|---|---|---|---|---|---|---|
| जी. | अ. | आ. | बंध | सं. | नि. | मो. |
| स्वतः | | | परतः | | | |

नियतिकालयोरधो जीवादिसप्तकं विन्यस्य नास्ति जीवो नियतितः नास्त्यजीवो नियतितः इत्याद्युच्चारणेन लब्धाः १४ चतुर्दश ।

तेषां संदृष्टिरित्थम्——

| नि. | का. | | | | | |
|---|---|---|---|---|---|---|
| जीव | अजीव | आ. | बं. | सं. | नि. | मो. |

पूर्वैः सहैते मिलिताः सन्तश्चतुरशीति ८४ भेदाः भवन्तीति ।

विनयवादिनां वशिष्ठपराशरजतुकर्णवाल्मीकिरोमहर्षणशक्तिदत्तव्यासैलापुत्रोपमन्यवैंद्रदत्तायस्थूणादयो द्वात्रिंशद्भेदाः । तेषामानयनमाह,——देवनृपतियतिज्ञातिवृद्धवालजननीजनकानामधो वाक्कायदानमनश्चतुष्टयं निक्षिप्य विनयो मनसा देवेषु कार्यः १ विनयो वाचा देवेषु कार्यः २ विनयः कायेन देवेषु कार्यः ३ विनयो दानेन देवेषु कार्यः ४ इत्याद्युच्चारणेन लब्धा भेदाः ३२ ।

तेषां संदृष्टिरित्थं ज्ञेया,——

| देव. | नृप. | पति | ज्ञाति | वृद्ध | वाल | जननी | जनक |
|---|---|---|---|---|---|---|---|
| वचन | | काय | | दान | | मन | |

अज्ञानवादिनां साकल्यवाकलकुथुमिचारायणकमठमाध्यन्दिनमोदपिप्पलादवादरायणैतिकायनवसुजैमिनिप्रभृतयः सप्तषष्टिसंख्याभेदाः । तेषामानयनमाह,——जीवादीनां नवानामधः सत्, असत्, सदसत्, अवाच्यं, सदवाच्यं, असदवाच्यं, सदसदवाच्यमिति सप्त निक्षिप्य सज्जीवभावं को वेत्ति, असज्जीवभावं को वेत्ति, इत्याद्युच्चारणेन लब्धा भेदाः ६३ । तेषां संदृष्टिरित्थम्,——

| सत्. | असत्. | सदसत् | अवाच्य | सद्वाच्य | असद्वाच्य | सदसद्वाच्य |
|---|---|---|---|---|---|---|
| जीव | अजीव | आश्रव | बंध | संवर | निर्जरा | मोक्ष |

पुनर्भावोत्पत्तिमाश्रित्य सद्भावासद्भावसदसद्भावावाच्यानां चतुष्टयं प्रस्तार्य " सद्भावोत्पत्तिं को वेत्ति, असद्भावोत्पत्तिं

को वेत्ति, सदसद्भावोत्पत्तिं को वेत्ति, अवाच्यभावोत्पत्तिं को वेत्ति" इत्युच्चारणया ( तत्संदृष्टिः ० ० ० ० ) लब्धैश्चतुर्भिरेतैः सह पूर्वभेदाः ६३ मिलित्वा ६७ सप्तषष्टिसंख्याका भवन्ति ।

सर्वसमासे ३६३ भेदाः भवन्ति ।

एकेन्द्रियादि जीवानां घोराज्ञानविवर्त्तिनाम् ।
तीव्रसन्तमसाकारं मिथ्यात्वमगृहीतकम् ॥ ३१५ ॥
एकैकं न त्रयो द्वे द्वे रोचंते न परे त्रयः ।
एकस्त्रीणीति जायंते सप्ताप्येते कुदर्शनाः ॥ ३१६ ॥
सकलोपशमे प्राप्तिः सम्यक्त्वस्यादिमेष्यते ।
निश्चयेनापरा[१] सर्वदेशोपशमने पुनः ॥ ३१७ ॥
मिथ्यात्वं पृष्ठतो लाभे सम्यक्त्वस्यादिमे भवेत् ।
मिथ्यात्वं मिश्रकं वास्य लाभेऽन्यत्रा[२]स्ति पृष्ठतः ॥३१८॥

---

शिक्षालापोपदेशानां ग्राहको यः समानसः ।
सः संज्ञी कथितोऽसंज्ञी हेयादेयाविवेचकः ॥ ३१९ ॥
गृण्हाति शिक्षते कृत्यमकृत्यं सकलं तदा ।
नाम्नाहूतः समभ्येति समनस्कोऽन्यथेतरः ॥ ३२० ॥
क्षयोपशमतः संज्ञी स्वान्तावरणकर्मणः ।
भवत्युदयंतोऽसंज्ञी विचेती भूतचेतनः ॥ ३२१ ॥

---

१ सम्यक्त्वस्य द्वितीया क्षयोपशमसम्यक्त्वरूपाप्राप्तिः षट् प्रकृतीनाम् उपशमे एकसम्यक्त्वप्रकृतिमिथ्यात्वस्योदये सति । २ अन्यत्र द्वितीय वेलायां अस्य सम्यक्त्वस्य लाभे सति पृष्ठतः मिथ्यात्वं भवति अथवा तृतीयगुणस्थानं भवति ।

अन्नादिसंज्ञया सर्वां प्रवृत्तिं कुरुते यतः ।
ततो न मानसाभावे प्रवृत्तिस्तस्य बाध्यते ॥ ३२२ ॥

---

शरीरत्रयपर्याप्तिषट्कयोर्योग्यपुद्गलाः ।
गृह्यंते येन स ज्ञेयो दक्षैराहारको भवी ॥ ३२३ ॥
समुद्घातं गतो योगी मिथ्यादृक्सासनायताः ।
विग्रहत्त्वविनाहाराः सिद्धायोगाश्च भाषिताः ॥ ३२४ ॥
भवेदौदारिको दंडे मिश्रो दंडकपाटयोः ।
कार्मणो योगिनो योगः प्रतरे लोकपूरणे ॥ ३२५ ॥
सदंडाररमंथानपूरणानि यथाक्रमम् ।
चतुर्भिः समयैः कृत्वा तावद्भिर्विनिवर्त्तते ॥ ३२६ ॥
षण्मासायुषि शेषे स्यादुत्पन्नं यस्य केवलम् ।
समुद्घातमसौ याति केवली नापरः पुनः ॥ ३२७ ॥

---

उपयोगो मतो द्वेधा बाह्याभ्यंतरभेदतः ।
स सामान्यविशेषाणां द्रव्याणां दर्शने क्षमः ॥ ३२८ ॥
बाह्योऽत्राष्टविधं ज्ञानं विशेषाकारदर्शकम् ।
सामान्यदृक् चतुर्द्धास्ति दर्शनं ज्ञेयमान्तरम् ॥ ३२९ ॥
घातिकर्मक्षये वृत्तिस्तस्य [2]केवलिनोः समम् ।
तत्क्षयोपशमेऽन्यत्र[3] क्रमतो वृत्तिरीरिता ॥ ३३० ॥
छद्मस्थेषूपयोगोस्ति द्वेधाप्यन्तर्मुहूर्त्तगः ।
साद्यपर्यवसानोऽसौ जायते जिनयोः समम् ॥ ३३१ ॥

---

१ अररम्=कपाटम् । २ सयोग्ययोगिनोः । ३ अन्यस्मिन् काले तस्योपयोगस्य वृत्तिरनुक्रमतः कथिता न तु युगपत् ।

आत्मयोग्यतया जातो यो भावो वस्तुदर्शकः ।
उपयोगो द्विधा सोऽस्ति साकारेतरभेदतः ॥ ३३२ ॥
विशेषार्थप्रकाशो यो मनोऽवधिमतिश्रुतैः ।
उपयोगः स साकारो जायतेऽन्तर्मुहूर्त्तगः ॥ ३३३ ॥
सामान्यार्थावभासो यो हृषीकावधिमानसैः ।
उपयोगो निराकारः स ज्ञेयोऽन्तर्मुहूर्त्तगः ॥ ३३४ ॥
द्विविधोऽप्युपयोगोऽसौ युगपज्जिनयोर्भवेत् ।
प्रत्यक्षीकृतनिःशेषतत्त्वः सादिरनंतकः ॥ ३३५ ॥
द्वित्रिसप्तद्विषु ज्ञेया गुणेषु क्रमतो बुधैः ।
[1]पंच षट् सप्त संति द्वावुपयोगा यथाक्रमम् ॥ ३३६ ॥
तेषां संदृष्टिरित्थम्,—

५, ५, ६, ६, ६, ७, ७, ७, ७, ७, ७, ७, २, २,

सयोगविक्रियातेजः कषायवेदनासु वै ।
आहारे मरणे सप्त समुद्धाता निवेदिताः ॥ ३३७ ॥
बहिरात्मप्रदेशानां ते[2] समूहेन निर्गमाः ।
[3]एकदिक्कौ स्मृतावंत्यौ सर्वदिक्काः परे पुनः ॥ ३३८ ॥
[4]चतुर्थे वासराः सप्त पंचमे ते चतुर्दश ।
आद्यसम्यक्त्वविच्छेदो गुणे पंचदश द्वयोः ॥ ३३९ ॥

---

१ ज्ञानत्रयं दर्शनद्वयमेवं पंच, ज्ञानत्रयं दर्शनत्रयमेवं षट्, ज्ञानचतुष्टयं दर्शनत्रयमेवं सप्त, ज्ञानमेकं दर्शनमेकमिति द्वयम् । २ समुद्धाताः । ३ अंत्यौ आहारमरणयोर्द्वौ समुद्धातावेकस्यामेव दिशि गच्छतः पुनरन्ये पंच सर्वत्र गच्छंति । ४ चतुर्थगुणे यदि उपशमसम्यक्त्वस्यांतरो भवति तदा दिनसप्तकं, पंचमे १४, षष्ठसप्तयोः पंचदश ।

तृतीयः संयमस्तुर्यं ज्ञानं सम्यक्त्वमादिमम् ।
आहारकद्वयं ज्ञेयं यत्रैकं तत्र नापरम् ॥ ३४० ॥
उत्तीर्योपशमश्रेणेः स मनःपर्यये गते ।
प्रमत्तं साद्यसम्यक्त्वं तुर्यं ज्ञानं विभाव्यते ॥ ३४१ ॥
न पश्चात्कृतमिथ्यात्वे प्राप्तशामिकदर्शने ।
संभवाभावतस्तत्र प्रमत्ते तुर्यबोधनम् ॥ ३४२ ॥
आहारर्द्धिः परीहारस्तीर्थकृत्तुर्यवेदनम् ।
नोदये तानि जायंते स्त्रीनपुंसकवेदयोः ॥ ३४३ ॥
इहामुत्र परं दुःखं यकाभिरुपयांति ताः ।
संज्ञाश्चतस्र आहारभीमैथुनपरिग्रहाः ॥ ३४४ ॥
पूर्णाः पूर्णेषु ताः सर्वाः प्रमत्तांतेषु देहिषु ।
आहारसंज्ञया हीनास्तिस्रस्ता गुणयोर्द्वयोः ॥ ३४५ ॥
पंचस्वाद्येऽनिवृत्त्यंशे द्वे मैथुनपरिग्रहे ।
सूक्ष्मलोभं ततो यावत्संज्ञा ज्ञेया परिग्रहे ॥ ३४६ ॥
असद्वेद्योदयाभावादप्रमत्तेऽन्नसंज्ञया ।
विना संज्ञाः परास्तिस्रः संभवंति यथागमम् ॥ ३४७ ॥
असातोदयतो रिक्तीभूतकोष्ठतयाऽङ्गिनः ।
अन्नोपयोगदृष्टिभ्यामन्नसंज्ञा प्रवर्तते ॥ ३४८ ॥
भयोपयोगतो भीमदृष्टितः सत्वहानितः ।
भयकर्मोदयाज्जीवे भयसंज्ञोपजायते ॥ ३४९ ॥
स्ववेदोदीरणात्पुंसि वृष्यभोजनतः स्त्रियाः ।
संगोपयोगतः संज्ञा पुंसो मैथुनिकी स्त्रियाम् ॥ ३५० ॥

---

१ मणपज्जव परिहारो पढमुवसम्मत्त दोण्णि आहारो ।
एदेसु एक्कपगदे णत्थित्ति असेसयं जाणे ॥ गो० ७३० ॥

२ द्वितीयोपशमेन सह मनःपर्ययोभवितुमर्हति, न प्रथमोपशमेन ।

षण्ढकर्मोदयात्तीव्रा वह्निज्वालेव तापिका ।
द्वयोर्योगोपयोगाभ्यां संज्ञा षण्ढस्य मैथुने ॥ ३५१ ॥
लोभकर्मोदयाज्जंतोरीक्षणादुपयोगिनः ।
मूर्च्छोपयोगतः संज्ञा प्रादुरस्ति परिग्रहे ॥ ३५२ ॥

यः प्रमाणनयमार्गकोविदो
जीवमार्गणगुणावलोकनम् ।
आदरेण विदधाति शुद्धधीः
सोऽश्नुतेऽमितगतिः शिवास्पदम् ॥ ३५३ ॥

इत्यमितगत्याचार्यप्रणीते पंचसंग्रहनामकग्रन्थे जीवसमासाख्यः
प्रथमः परिच्छेदः ।

अथ प्रकृतिस्तवः ।

यो ज्ञात्वा प्रकृतीर्देवो दग्धवान् ध्यानवन्हिना ।
तं प्रणम्य महावीरं क्रियते प्रकृतिस्तवः ॥ १ ॥
ज्ञानदृष्ट्यावृती वेद्यं मोहनीयायुषी मताः ।
नामगोत्रान्तरायाश्च मूलप्रकृतयोऽष्टधा ॥ २ ॥
एताः पंच नव द्वे स्युरष्टाविंशतिरुत्तराः ।
चतस्रो नवतिस्त्र्यग्रा द्वे पंच च यथाक्रमम् ॥ ३ ॥
गृहीतः पुद्गलस्कंधो मिथ्यात्वासंयमादिभिः ।
प्रयाति कर्मरूपेण परिणाममनेकधा ॥ ४ ॥
ज्ञानस्योदयमापन्नाः शरीरिणि पिधायिकाः ।
भुवनोद्योतिनो व्योम्नि सूर्यस्येवाम्बुदावलीः ॥ ५ ॥
मतिश्रुतावधिज्ञानं मनःपर्ययकेवले ।
पंचानामावृतेस्तेषां पंचज्ञानावृतीः विदुः ॥ ६ ॥

१ आच्छादिकाः । २ आवरणात् ।

आर्यावृत्तम् ।

निद्रानिद्रा प्रचलाप्रचला स्त्यानादिगृद्धयो निद्रा ।
प्रचला चक्षुरचक्षुरवधिकेवलदर्शनावृतयः ॥ ७ ॥

अनुष्टुप् वृत्तम् ।

वारिका[1] दर्शनस्यैताः प्रतिहार्य इवात्मनः ।
दर्शनावरणस्योक्ता नव प्रकृतयो जिनैः ॥ ८ ॥
मध्वक्तसायकस्येव[2] सुखदुःखविधायिनः ।
द्वे सद्वेद्यमसद्वेद्यं वेद्यस्य प्रकृती मते ॥ ९ ॥
नीयते येन मूढत्वं मद्येनेव शरीरवान् ।
मोहनं तत् द्विधा प्रोक्तं दृष्टिचारित्रमोहतः ॥ १० ॥
एकधा बंधतस्तत्र सत्वतो दृष्टिमोहनम् ।
त्रेधा सम्यक्त्वमिथ्यात्वसम्यङ्मिथ्यात्वभेदतः ॥ ११ ॥
कषाया नोकषायाश्च द्वेधा चारित्रमोहनम् ।
षोडश प्रथमास्तत्र द्वितीया नव भाषिताः ॥ १२ ॥
क्रोधो मानो जिनैर्माया लोभः प्रत्येकमीरिताः[3] ।
तत्रानंतानुबंध्यादि विकल्पेन चतुर्विधाः ॥ १३ ॥
ते च यथाथनामानः सत्रा[4]नंतानुबंधिभिः ।
अप्रत्याख्यानावृत्प्रत्याख्यानावृत्संज्वलनाः[5] स्मृताः ॥ १४ ॥
हास्यं रत्यरती शोको भयं साकं जुगुप्सया ।
स्त्रीपुंनपुंसका वेदा नोकषाया नवेरिताः ॥ १५ ॥

---

१ आवरणयः । २ मधुलिप्तखड्गस्येव । ३ कथिताः । ४ सह । ५ अप्रत्याख्यानावरणं, प्रत्याख्यानावरणं, संज्वलनं ।

विद्युन्मालाछन्दः ।

आयुः श्वाभ्रं तैर्यग्योनं मार्त्यं दैवं तज्ज्ञातव्यम् ।
कारागारेणेवोद्बद्धो येनाङ्ग्यास्ते स्थास्नुर्भूयः ॥ १६ ॥

अनुष्टुप् ।

गतिजातिशरीराद्याः क्रियंते येन भूरिशः ।
कुलालेनेव कुंभाद्या नामकर्म तदुच्यते ॥ १७ ॥
पिंडापिंडाभिधास्तस्य द्वेधा प्रकृतयो मताः ।
पिंडाश्चतुर्दश प्राज्ञैस्तत्राष्टाविंशतिः पराः ॥ १८ ॥
पिंडाः १४ । अपिंडाः २८ । मिलिताः ४२ । भेदतः ९३ ।
गतिर्जातिः शरीरांगोपांगौ संघातसंहती ।
वर्णगन्धरसस्पर्शबंधानुपूर्व्यः संस्थितिः ॥ १९ ॥
निर्माणागुरुलघ्वाह्वे परघातोपघातने ।
उच्छ्वास आतपोद्योतौ तीर्थकृत्त्वनभोगती ॥ २० ॥
त्रसबादरपर्याप्तप्रत्येकानि स्थिरं शुभम् ।
सुभगं सुस्वरादेये यशःकीर्त्तिश्च सेतराः ॥ २१ ॥
नारकी येन तैरश्ची मानुषी त्रैदशी गतिः ।
विधीयते तदादिष्टं गतिनाम चतुर्विधम् ॥ २२ ॥
एकद्वित्रिचतुः पंच हृषीका येन देहिनः ।
क्रियंते पंचधा तत्स्याज्जातिनामेह पंचधा ॥ २३ ॥

आर्यावृत्तम् ।

औदारिकवैक्रियिकावाहारकतैजसौ परः कर्म ।
इति पंचकायजनकं शरीरनामास्ति पंचविधम् ॥ २४ ॥

अनुष्टुप् ।

अंगोपांगं त्रिकायानामंगोपांगकरं त्रिधा ।
संघातः पंचधांगानां संघातजनकक्षमः ॥ २५ ॥

वज्रर्षभादिनाराचमाद्यं संहननं परम् ।
वज्रनाराचनाराचे अर्द्धनाराचकीलके ॥ २६ ॥
अन्ये संहननं षष्ठमसंप्राप्तास्रपाटिकम् ।
अस्थिबंधकरं नाम षोढा संहननं विदुः ॥ २७ ॥
जनकं शुक्लादिवर्णानां वर्णनामास्ति पंचधा ।
गंधनाम द्विधा शस्ताशस्तगंधकरं स्मृतम् ॥ २८ ॥
मधुरोऽम्लः कटुस्तिक्तः कषायः पंच ये रसाः ।
तेषां विधायकं कर्म रसनामास्ति पंचधा ॥ २९ ॥
कर्कशः शीतलः स्निग्धो गुरुः स्पर्शोऽस्ति सेतरः ।
अष्टानां कारणं तेषामष्टधा स्पर्शनामकम् ॥ ३० ॥
पंचांगबंधनं ज्ञेयं पंचधा नाम बंधनम् ।
चतुर्विधानुपूर्व्यस्ति चतुरीतिप्रवेशिका ॥ ३१ ॥

आर्यावृत्तम् ।

ज्ञेयं समचतुरस्रं न्यग्रोधं सातिकुब्जके भविनः ।
हुंडं वामनकाख्यं संस्थानं जायते षोढा ॥ ३२ ॥

अनुष्टुप् छन्दः ।

नभोरीतिर्द्विधा ज्ञेया शस्ताशस्तगतिप्रदा ।
चतुर्दशेति निर्णीताः पिंडप्रकृतयो जिनैः ॥ ३३ ॥
क्रियते येन नीचोच्चैः स्थाने चित्रकृतो यथा ।
प्रकृती तस्य नीचोच्चे द्वे प्रोक्ते गोत्रकर्मणः ॥ ३४ ॥
यो दानलाभभोगानां विघ्नं वीर्योपभोगयोः ।
भांडागारिकवद्धत्ते सोऽन्तरायोऽस्ति पंचधा ॥ ३५ ॥
नाम्नः षड्विंशतिं त्यक्त्वा मोहनप्रकृतिद्वयम् ।
सर्वेषां कर्मणां शेषा बंधप्रकृतयः स्मृताः ॥ ३६ ॥

१२० बन्धप्रकृतयः ।

अबंधा मिश्रसम्यक्त्वे बंधसंघातयोर्दश ।
स्पर्शे सप्त भवन्त्येका गंधेऽष्टौ रसवर्णयोः ॥ ३७ ॥

२ । ५ । ५ । ७ । १ । ८ मिलिताः २८ ।

सम्यङ्मिथ्यात्वसम्यक्त्वप्रकृतिद्वितयोज्झिताः ।
एताः प्रकृतयो यांति कदाचिदपि नोयदम् ॥ ३८ ॥

२६ । १२२ उदय प्रकृतयः ।

मतेनापरसूरीणां सर्वाः प्रकृतयोऽगिनाम् ।
बंधोदयौ प्रपद्यन्ते स्वहेतुं प्राप्य सर्वदा ॥ ३९ ॥

सर्वाः १४८ ।

आर्यावृत्तम् ।

वैक्रियिकाहारकनृश्वाभ्रत्रिदशद्वयानि सम्यक्त्वम् ।
सम्यङ्मिथ्यात्वोच्चे त्रयोदशोद्वेल्लना ज्ञेयाः ॥ ४० ॥

त्रयोदश १३ उद्वेलनप्रकृतयः ।

या विनश्यन्त्यनासाद्य स्वमुखेनोदयं बुधैः ।
उद्वेल्लनाभिधाः प्रोक्ताः कर्मप्रकृतयोऽत्र ताः ॥ ४१ ॥

आर्यावृत्तम् ।

दशविघ्नज्ञानावृतयो दृष्ट्यावृतयो नवोपघाताख्यम् ।
तैजसकार्मणनिर्मितवर्णचतुष्टयभयजुगुप्साः ॥ ४२ ॥

मिथ्यात्वागुरुलघुनी कषायषोडशकर्मीरिताः सद्भिः ।
सप्तयुता चत्वारिंशद्ध्रुवसंज्ञाः प्रकृतयस्ताः ॥ ४३ ॥

परघातोद्योतातपतीर्थकृदाहारकद्वयानि चोच्छ्वासः[1] ।
आयुश्चतुष्कमेता एकादश सन्ति शेषाख्याः[2] ॥ ४४ ॥
द्वे वेद्ये गतयो हास्यचतुष्कं द्वे नभोगती ।
षट्के संस्थानसंहत्योर्गोत्रे वैक्रियिकद्वयम् ॥ ४५ ॥
चतुष्कमानपूर्वीणां दशयुग्मानि जातयः ।
औदारिकद्वयं वेदा एताः सपरिवृत्तयः[3] ॥ ४६ ॥
संख्या ६२ ।
एताः प्रकृतयः साष्टाचत्वारिंशच्छतप्रमाः ।
सत्युत्तरोत्तरा ज्ञेयाः संख्यातीता विचक्षणैः ॥ ४७ ॥

आगममार्गप्रकटितसारं
यो हृदि धत्ते प्रकृतिविचारम् ।
याति स भव्योऽमितगतिदृष्टं
नाकिनिषेव्यः पदमनदृष्टम् ॥ ४८ ॥

इति श्रीमदमितगत्याचार्यवर्यप्रणीते पंचसंग्रहनामकग्रंथे
प्रकृतिस्तवाख्यो द्वितीयः परिच्छेदः ॥

---

## अथ कर्मप्रकृतिबंधस्तवः ।

प्रणम्य भक्तितः सर्वान् सर्वज्ञान् सर्वदर्शिनः ।
बन्धोदयसदुच्छेदवर्णना क्रियते मया ॥ १ ॥

---

१ क-ख पुस्तकयोः " परघातोपघातातप " इत्यादि पाठः किन्त्वनेन मात्राधिक्यं । तथाच गोम्मटसार कर्मकाण्डेऽपि " सेसे तित्थाहारं परघाद च-उक्क सव्व आऊणि " इति पाठः परघातचतुष्के परघातोच्छ्वासोद्योतातप प्रकृतयः सन्ति । २ अध्रुवसंज्ञाः । ३ कदाचित्कस्याः कदाचित्कस्या उदयः, एतासां नियतोदयो नास्ति । ४ सत्ता ।

बंधोऽभिधीयतेऽन्योऽन्यं संपर्कों जीवकर्मणोः ।
द्रव्यादेः फलदातृत्वं कर्मणामुदयो जिनैः ॥ २ ॥
[1]समुदीर्यानुदीर्णानां स्वल्पीकृत्य स्थितिं बलात् ।
कर्मणामुदयावल्यां प्रक्षेपणमुदीरणा ॥ ३ ॥
कर्मणां फलदातृत्वं द्रव्यक्षेत्रादियोगतः ।
उदयः पाकजं ज्ञेयमुदीरणमपाकजम् ॥ ४ ॥
कर्मणां विद्यमानत्वं यत्सत्त्वं तन्निगद्यते ।
तानि चत्वारि जायंते प्रथमोत्तरकर्मणाम् ॥ ५ ॥
तदुक्तम्,–
परस्परं प्रदेशानां प्रवेशो जीवकर्मणोः ।
एकत्वकारको बंधो रुक्मकांचनयोरिव ॥ ६ ॥
ग्रहणं कर्मयोग्यानां पुद्गलानां प्रतिक्षणम् ।
सकषायस्य जीवस्य बंधोऽनेकविधः स्थितः ॥ ७ ॥
कर्मणां संगृहीतानां सत्तोक्ता विद्यमानता ।
उदयो भुक्तिकालस्तु धान्यानामिव कोविदैः ॥ ८ ॥
कृष्ट्वा कृष्ट्वोपरिस्थानां प्रक्षेपणमुदीरणा ।
असंख्यकर्मभागानां स्थिराणामुदयावलौ ॥ ९ ॥
जीवकर्मप्रदेशानां विश्लेषो यः परस्परम् ।
अपुनर्भाविकोऽवाचि स क्षयः क्षीणकल्मषैः ॥ १० ॥
प्रबध्नंत्यप्रमत्तान्ताः सप्ताष्टौ मिश्रवर्जिताः ।
वर्जितान्यायुषा सप्त मिश्रापूर्वानिवृत्तयः ॥ ११ ॥
विनायुर्मोहनीयाभ्यां षट्कं सूक्ष्मकषायकाः ।
एकमेव त्रयो वेद्यं निर्बन्धो योगवर्जितः ॥ १२ ॥

---

१ उदयमानीय बलात्, न उदयागतानां कर्मणाम् ।

तत्संदृष्टिरित्थम् ,—

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ७ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | ६ | १ | १ | १ | ० |
| ८ | ८ | ० | ८ | ८ | ८ | ८ | ० | ० | | | | | |

अष्टौ कर्माणि सूक्ष्मान्ताः भुंजते मोहनं विना ।
शान्तक्षीणकषायाख्यावन्तिमौ घातिभिर्विना ॥ १३ ॥
८।८।८।८।८।८।८।८।८।८।७।७।४।४।
स्वस्थावस्थायामिति
उदीरयंति घातीनि[1] तत्स्था[2] मोहं समोहनाः[3] ।
वेद्यायुषी प्रमत्तान्ता योग्यंता गोत्रनामनी ॥ १४ ॥
यतोऽत्रायुषो मरणावल्यामुदीरणा नास्ति[4] ।
ततः——
सप्तैव मरणावल्यां प्रमत्तान्ता अमिश्रकाः[5] ।
अष्टौ च सर्वदाऽमिश्रस्तस्य[6] तस्यामभावतः[7] ॥ १५ ॥
पंच[8] मोहं विना सूक्ष्मः क्षीणो[9] द्वे गोत्रनामनी ।
कर्मणी स्फुटमावल्यामुदीरयति निश्चितम् ॥ १६ ॥

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | ८ | ७ | ८ | ८ | ८ | ६ | ६ | ६ | ६ | ५ | ५ | २ | ० |
| ७ | ७ | ० | ७ | ७ | ७ | | | | ५ | | २ | | |

सत्ता कथ्यते,——
शांतान्तेषु समस्तानि सप्त मोहमृते परे ।
जिनयोः संत्यघातीनि घातिकर्मविमुक्तयोः ॥ १७ ॥

१ ज्ञानदर्शनान्तरायत्रयं । २ मोहस्थाः । ३ सूक्ष्मान्ता मोहमुदीरयंति । ४ मरणावस्थायामन्तर्मुहूर्त्तायुषि उदीरणा नास्ति । ५ मिश्रगुणस्थानवर्जिताः । ६ मिश्रस्य । ७ मरणावल्याम् । ८ सूक्ष्मसांपरायान्ते मोहंविनापंचकर्मणामुदीरणा शेषकालेषण्णाम् । ९ क्षीणश्च पंच ।

तत्संदृष्टिर्यथा——
८।८।८।८।८।८।८।८।८।८।८।७।४।४।
बंधहेतुः कथ्यते,——
सम्यक्त्वं तीर्थकर्तृत्वे वृत्तमाहारकद्वये[1] ।
बंधस्य हेतुरन्येषु मिथ्यात्वसंयमादयः ॥ १८ ॥
बंधविच्छेदो भण्यते,——
एताः षोडश दुर्दृष्टौ सासने पंचविंशतिः ।
दशाविरमणे देशे चतस्रः षट् प्रमादिनि ॥ १९ ॥
एकातो द्वे ततस्त्रिंशच्चतस्रः पंचपंचसु ।
सूक्ष्मे षोडश विच्छिन्ना वेद्यं योगिनि बंधतः ॥ २० ॥
बंधे सर्वाः प्रकृतयः[2] १२० ।

एतास्तीर्थकराहारकद्वयहीना मिथ्यादृष्टौ सासने, सुरनरायुर्भ्यां विना मिश्रे, तीर्थकरनरसुरायुर्भिः सहासंयते देशे प्रमत्ते, आहारकद्वयेन सहाप्रमत्ते अपूर्वे, सप्तसु भागेषु बंधविच्छेदः, अनिवृत्तौ पंचसु भागेषु, सूक्ष्मादिषु ।

मिथ्यादृष्टिगुणे संदृष्टिरित्थम् वं. व्यु. १६, बंध ११७, अबंध ३, अं ३१ ।

| सासने | मिश्रे | असंयते | देशे | प्रमत्ते | अप्रमत्ते |
|---|---|---|---|---|---|
| २५ | ० | १० | ४ | ६ | १ |
| १०१ | ७४ | ७७ | ६७ | ६३ | ५९ |
| १९ | ४६ | ४३ | ५३ | ५७ | ६१ |
| ४७ | ७४ | ७१ | ८१ | ८५ | ८९ |

१ सम्मेव तित्थबंधो आहारदुगं पमादरहिदम्मि । गो. क. । २ कर्मणाम् १४८ प्रकृत्यपेक्षया ।

अपूर्वे सप्तसु भागेषु

| | | | | | | |
|---|---|---|---|---|---|---|
| २ | ० | ० | ० | ० | ३० | ४ |
| ५८ | ५६ | ५६ | ५६ | ५६ | ५६ | २६ |
| ६२ | ६४ | ६४ | ६४ | ६४ | ६४ | ९४ |
| ९० | ९२ | ९२ | ९२ | ९२ | ९२ | १२२ |

अनिवृत्तौ पंचसु भागेषु

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| २२ | २१ | २० | १९ | १८ |
| ९८ | ९९ | १०० | १०१ | १०२ |
| १२६ | १२७ | १२८ | १२९ | १३० |

सूक्ष्मादिषु पंचसु

| सू० | उ० | क्षी० | स० | अ० |
|---|---|---|---|---|
| १६ | ० | ० | १ | ० |
| १७ | १ | १ | १ | ० |
| १०३ | ११९ | ११९ | ११९ | १२० |
| १३५ | १४७ | १४७ | १४७ | १४८ |

मिथ्यात्वादिषु व्यच्छुन्नप्रकृतयः ।

आर्याच्छन्दः ।

मिथ्यात्वं षंढवेदः श्वभ्रायुः श्वभ्रयुग्महुंडानि ।
आद्यं जातिचतुष्कं स्थावरसाधारणातपापूर्णाः ॥ २१ ॥
सूक्ष्मं संहतिरंत्या बंधान्मिथ्यात्वलब्धजन्मानः ।
षोडश विच्छिद्यन्ते मिथ्यादृष्टौ गुणस्थाने ॥ २२ ॥ युग्मम् ॥
आद्यकषायचतुष्कं तिर्यग्द्वयातिर्यगायुरुद्योताः ।
दुर्भगदुःस्वरमध्यमसंहातिसंस्थितिचतुष्कानि ॥ २३ ॥
सत्रानादेयेन स्त्री नीचं स्त्यानगृद्धयस्तिस्रः ।
अशुभविहायोरीतिर्विच्छिद्यन्ते द्वितीयगुणे ॥ २४ ॥ युग्मम् ॥

प्रथमकषायोदयजा एता बंधादभावतस्तेषां ।
रभसेन पंचविंशतिरुपरिष्टात्प्रकृतयस्तस्मात् ॥ २५ ॥
द्वितीयानां कषायाणां चतुष्कमादिसंहतिः ।
नृद्वयौदारिकद्वन्दे मनुष्यायुर्देशाव्रते ॥ २६ ॥
द्वितीयकषायोत्थाना एताः प्रकृतयः स्फुटम् ।
प्रपद्यन्ते व्यवच्छेदे परं तेषाममभावतः ॥ २७ ॥
तृतीयानां कषायाणां चतुष्कं याति विच्छिदम् ।
देशव्रते तदुत्थानामभावात्परतस्ततः ॥ २८ ॥
अरत्ययशसी शोकाऽस्थिरासाताशुभानि षट् ।
प्रमत्ते यांति विच्छेदं सुरायुश्चाप्रमत्तके ॥ २९ ॥
अपूर्वे प्रथमे भागे द्वे निद्राप्रचले ततः ।
षष्ठे प्रकृतयस्त्रिंशच्चतस्रः सप्तमे ततः ॥ ३० ॥
तैजसं कार्मणं पंचहृषीक[1]ममरद्वयम् ।
स्थिरं प्रथमसंस्थानं शुभंवैक्रियिकद्वयम् ॥ ३१ ॥
त्रसाद्य[2]गुरु[3]लघ्वादिवर्णादीनां चतुष्टयम् ।
सुभगं सुस्वरादेये निर्माणं सन्नभोगतिः ॥ ३२ ॥
आहारकद्वयं तीर्थकृत्त्वं त्रिंशदिमास्ततः ।
हास्यं रतिर्जुगुप्सा भीश्चतस्रः सप्तमे ततः ॥ ३३ ॥
पुंवेदोन्त्यकषायाणां चतुष्कं पंचपंचसु ।
भागेषु याति विच्छेदमनिवृत्तेः क्रमादिमाः ॥ ३४ ॥
पंच ज्ञानावृतेरुच्चं चतस्रो दर्शनावृतेः ।
यशः पंचान्तरायस्य छिन्नाः सूक्ष्मे च षोडश ॥ ३५ ॥

१ पंचहृषीकं=पंचेन्द्रियं । २ त्रसबादरपर्याप्तप्रत्येकानि । ३ अगुरुलघूपघातपरघातोच्छ्वासानि ।

शांतक्षीणावपाकृत्स्य सातं योगिनि केवलम् ।
बंधः सान्तोऽप्यनंतोऽयमोघरूपेण जायते ॥ ३६ ॥

उदयः कथ्यते—

मिश्रकमुदेति मिश्रे सम्यक्त्वं गुणचतुष्टये तस्मात् ।
आहारकं प्रमत्ते तीर्थकरत्वं सयोगजिने ॥ ३७ ॥
यस्मान्न याति नरकं न ततः सासादने तदनुपूर्वी ।
मिश्रेऽखिलानुपूर्व्यो न संति येनैष न म्रियते ॥ ३८ ॥

उदयविच्छेदः कथ्यते—

पंच नवैका सप्तदशाष्टौ पंचादितश्चतस्रश्च ।
षट् षट् गच्छंत्युदयादेका द्वे षोडश त्रिंशत् ॥ ३९ ॥
द्वादश निर्योगान्ते गुणे प्रकृतयः क्रमाद्व्यवच्छेदम् ।
द्वाविंशशताः सम्यक् प्रत्येतव्या बुधैः सर्वाः ॥ ४० ॥

एताः सम्यक्त्वसम्यङ्मिथ्यात्वाहारकद्वयतीर्थकरहीना मिथ्यादृष्टौ, नरकानुपूर्व्या विना सासने, तिर्यङ्नरसुरानुपूर्वीभिर्विना सम्यग्मिथ्यात्वेन च सह मिश्रे, चतसृभिरानुपूर्वीभिः सम्यक्त्वेन च सहासंयते, देशे, आहारकद्वयेन सह प्रमत्ते, अप्रमत्ते, अपूर्वे, अनिवृत्तौ, सूक्ष्मादिषु, क्षीणे द्विचरमसमये क्षीणचरमसमये, तीर्थकरेण सह सयोगे, अयोगे, उदयविच्छेदप्रकारो निम्नलिखितरीत्या ज्ञेयः ।

| मिथ्यात्वे | सासने | मिश्रे | असंयते | देशे | प्रमत्ते |
|---|---|---|---|---|---|
| ५ | ९ | १ | १७ | ८ | ५ |
| ११७ | १११ | १०० | १०४ | ८७ | ८१ |
| ५ | ११ | २२ | १८ | ३५ | ४१ |
| ३१ | ३७ | ४८ | ४४ | ६१ | ६७ |

| अप्रमत्ते | अपूर्वे | अनिवृत्तौ | सूक्ष्मे | उपशांते |
|---|---|---|---|---|
| ४ | ६ | ६ | १ | २ |
| ७६ | ७२ | ६६ | ६० | ५९ |
| ४६ | ५० | ५६ | ६२ | ६३ |
| ७२ | ७६ | ८२ | ८८ | ८९ |

| क्षीणे प्रथमसमये | द्वितीयसमये | सयोगे | अयोगे | सर्वाः |
|---|---|---|---|---|
| २ | १४ | ३० | १२ | ० |
| ५७ | ५५ | ४२ | १२ | ० |
| ६५ | ६७ | ८० | ११० | १२२ |
| ९१ | ९३ | १०६ | १३६ | १४८ |

उदयविच्छेदमुक्त्वा प्रकृतयः कथ्यन्ते—

पंचापर्याप्तिमिथ्यात्वसूक्ष्मासाधारणातपाः ।
मिथ्यादृष्टिगुणस्थाने प्रभ्रश्यंत्युदयादिमाः ॥ ४१ ॥
चतस्रो जातयः पूर्वाः कोपाद्याद्यचतुष्टयम् ।
स्थावरं चोदयादेता नव भ्रश्यंति सासने ॥ ४२ ॥
सम्यग्मिथ्यात्वमेवकं मिश्रे यात्युदयक्षयं ।
श्वभ्रदेवायुषी देवद्वयं वैक्रियकद्वयम् ॥ ४३ ॥
नृतिर्यगानुपूर्व्यौ ( द्वे ) दुर्भगं नारकद्वयम् ।
द्वितीयानां कषायाणां चतुष्कमयशोयुतम् ॥ ४४ ॥
अनादेयमिमाः सप्तदश प्रकृतयः स्फुटम् ।
असंयतगुणस्थाने स्वीकुर्वन्त्युदयक्षयम् ॥ ४५ ॥ विशेषकम् ॥
नीचोद्योतौ तृतीयानां कषायाणां चतुष्टयम् ।
तिर्यग्गत्यायुषी अष्टौ देशे यांत्युदयक्षयम् ॥ ४६ ॥
आहारकद्वयं स्त्यानगृद्धित्रयमिमा गुणे ।
प्रमत्तसंयते पंच श्रयन्त्युदयतश्च्युतिम् ॥ ४७ ॥

अंत्याः संहतयस्तिस्रः सम्यक्त्वं चाप्रमत्तके ।
अपूर्वे नोकषायाणां षट्कं यात्युदयच्युतिम् ॥ ४८ ॥
संज्वालं त्रितयं वेदत्रयं षडनिवृत्तिके ।
क्षणेंते लोभसंज्वालः सूक्ष्मे यात्युदयक्षयम् ॥ ४९ ॥
वज्रनाराचनाराचे शान्ते द्वे उदयक्षयम् ।
द्वे निद्राप्रचले यातः क्षीणस्योपांतिके क्षणे ॥ ५० ॥
दश ज्ञानान्तरायस्थाश्चतस्रो दर्शनस्थिताः ।
चतुर्दशोदयाद्यान्ति क्षीणस्यांते क्षणे क्षयम् ॥ ५१ ॥
वेद्यमेकतरं वर्ण चतुष्कौदारिकद्वये ।
आद्यसंहननं षट्कं संस्थानानां स्थिरद्वयम् ॥ ५२ ॥
शुभसुस्वरयोर्युग्मे निर्मित्तेजोनभोगती ।
चतस्रोऽगुरुलघ्वाद्याः प्रत्येककार्मणे इमाः ॥ ५३ ॥
अश्यंत्युदयतस्त्रिंशत् सयोगस्यान्तिमे क्षणे ।
वेदनीयं द्वयोरेकं मर्त्यगत्यायुषी त्रसम् ॥ ५४ ॥
पंचाक्षं सुभगं स्थूलं पर्याप्तं तीर्थकर्तृता ।
आदेयं यश उच्चं च निर्योगे द्वादश च्युताः ॥ ५५ ॥

---

प्रयांत्युदीरणाच्छेदं पंच प्रकृतयो नव ।
एका सप्तदशाष्टाष्टौ चतस्रः षट् षडादितः ॥ ५६ ॥
एका द्वे षोडशैकोनचत्वारिंशत्क्रमादिमाः ।
एकोप्युदीर्यते जातु नायोगे प्रकृतिर्जिने ॥ ५७ ॥
उदीरणायां सर्वाः प्रकृतयः १२२ ।

एताः सम्यक्त्वसम्यङ्मिथ्यात्वाहारकद्वयतीर्थकरहीना मिथ्यादृष्टौ, नरकानुपूर्वीं विना सासादने, निर्यङ्नरसुरानुपूर्वी

विना सम्यङ्मिथ्यात्वेन सह मिश्रे, चतसृभिरानुपूर्वीभिः सम्यक्त्वेन च सहासंयते, देशे, आहारकद्वयेन सह प्रमत्ते, अप्रमत्तादिकेषु षट्सु, तीर्थंकरेण सह सयोगे,

तद्दर्शनप्रकारः——

| मिथ्यात्वे | सासने | मिश्रे | असंयते | देशे |
|---|---|---|---|---|
| ५ | ९ | १ | १७ | ८ |
| ११७ | १११ | १०० | १०४ | ८७ |
| ५ | ११ | २२ | १८ | ३५ |
| ३१ | ३७ | ४८ | ४४ | ६१ |

| प्रमत्ते | अप्रमत्ते | अपूर्वे | अनिवृत्तौ | सूक्ष्मे |
|---|---|---|---|---|
| ८ | ४ | ६ | ६ | १ |
| ८१ | ७३ | ६९ | ६३ | ५७ |
| ४१ | ४९ | ५३ | ५९ | ६५ |
| ६७ | ७५ | ७९ | ८५ | ९१ |

| उपशान्ते | द्विचरमे क्षीणे | चरमे | सयोगिनि | अयोगे |
|---|---|---|---|---|
| २ | २ | १४ | ३९ | ० |
| ५६ | ५४ | ५२ | ३९ | ० |
| ६६ | ६८ | ७० | ८३ | १२२ |
| ९२ | ९४ | ९६ | १०९ | १४८ |

सातासातमनुष्यायुः संयुक्ताः संत्युदीरणे ।
अष्टप्रकृतयः पंच प्रमत्तस्योदयस्थिताः ॥ ५८ ॥

सातासातनरायुर्भिर्नियोगोदयजाः विना ।
संति योगेन एकोनचत्वारिंशदुदीरणे ॥ ५९ ॥

उदयोदीरणे तुल्ये भवतोऽन्येषु सर्वथा ।
त्रीन्मिस्त्य गुणानेतान् प्रमत्तायोगयोगिनः ॥ ६० ॥

न सत्याहारकद्वन्द्वे न तीर्थकृति सासनः ।
नैति तिर्यक्त्वमिश्रत्वे सत्त्वे तीर्थकृतो भवी ॥ ६१ ॥

सत्ताक्षयः कथ्यते,——

चतुर्षु निर्वृताद्येषु काप्यनंतानुबंधिना ।
मिथ्यात्वं मिश्रसम्यक्त्वे सप्त यांति क्षयं समम् ॥ ६२ ॥
षोडशाष्टकमेकैका षडेकैका चतुर्ष्वतः ।
क्षयं प्रकृतयो यांति नवांशेष्वनिवृत्तिके ॥ ६३ ॥
एका याति क्षयं सूक्ष्मे क्षीणे गच्छान्ति षोडश ।
समये गतयोगस्य द्वासप्ततिरुपान्तिमे ॥ ६४ ॥
त्रयोदशांतिमे तत्र निहत्य प्रकृतीर्जिनम् ।
मुक्तिं प्राप्तं नमाम्यष्टचत्वारिंशच्छतप्रमाः ॥ ६५ ॥

सर्वाः प्रकृतयः १४८ ।

एताः श्वभ्रतिर्यक्सुरायुर्हीनाश्चतुर्षु अपूर्वे अनिवृत्तौ नवांशेषु सूक्ष्मादिषु—

तद्दर्शनप्रकार[1]:—

| मि० | सा० | मि० | असं. | देश. | प्र० | अप्रमत्ते | अपूर्वे |
|---|---|---|---|---|---|---|---|
| ० | ० | ० | ७ | ७ | ७ | ७ | ० |
| १४८ | १४५ | १४७ | १४५ | १४५ | १४५ | १४५ | १३८ |

---

१ अत्र अपेक्षाभेदेन कथनम् गोम्मटसार कर्मकाण्डे तु ईदशी सत्त्वरचना।

| गुण | सत्त्व | असत्त्व | सत्त्व व्यु. |
|---|---|---|---|
| मिथ्यात्व | १४८ | × | × |
| सासादन | १४५ | ३ | × |
| मिश्र | १३७ | १ | × |

( शेषमग्रे पृष्ठे. )

## अनिवृत्तौ नवांशेस्वित्थम्—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १६ | ८ | १ | १ | ६ | १ | १ | १ | १ |
| १३८ | १२२ | ११४ | ११३ | १०७ | १०६ | १०५ | १०४ | १०३ |

| | | | |
|---|---|---|---|
| | अक्षायिकसम्यक्त्वे | | |
| अविरत— | १४८ | × | १ |
| देशविरत | १४७ | १ | १ |
| प्रमत्त वि. | १४६ | २ | × |
| अप्रमत्त | १४६ | २ | × |
| अपूर्वकरण उ. | १४६ | २ | × |
| अनिवृत्तिकरण उ. | १४६ | २ | × |
| सूक्ष्मसांपराय | १४६ | २ | × |
| उपशान्त | १४६ | २ | × |
| | क्षायिकसम्यक्त्वे | | |
| अविरत | १४१ | ७ | २ |
| देशविरत | १३९ | ९ | × |
| प्रमत्त | १३९ | ९ | × |
| अप्रमत्त | १३९ | ९ | × |
| अपूर्व उ. | १३९ | ९ | × |
| अनि. उ. | १३९ | ९ | × |
| सूक्ष्म. उ. | १३९ | ९ | × |
| उपशान्त | १३९ | ९ | × |
| अपूर्व क्षप. | १३८ | १० | × |
| अनिवृत्ति. क्षपक. | १३८—१२२—११४ ११३—११२—१०६ १०५—१०४—१०३ १०२ | १०—२६—३४—३५ ३६—४२—४३—४४ ४५—४६ | १६—८ १—१—६— १-१-१-१ |
| सूक्ष्म | १०२— | ४६ | १ |
| क्षीण | १०१ | ४७ | १६ |
| सयोगकेवली | ८५ | ६३ | × |
| अयोगकेवली द्वि. | ८५ | ६३ | ७२ |
| ,, च. | १३ | १३५ | १३ |

सूक्ष्मसांपराये—१ । १०२ ।

| उपशांत | द्वि. क्षी. | क्षी.च. | स. | अयोग | अयोग |
|---|---|---|---|---|---|
| ० | २ | १४ | ० | प्रथमसमये | द्वितीयसमये |
| ० | १०१ | ९९ | ८५ | ७२ | १३ |
| १४२ | | | | ८५ | १३ |

अथवा द्वितीयो विकल्पः——

श्वभ्रतिर्यक्सुरायुर्हीना मिथ्यादृष्टौ ०, १४५, ३ ।

"न सत्याहारकद्वन्द्वे न तीर्थकृति सासन" इति वचनादाहारकतीर्थकरहीनाः सासने ०, १४२, ६ ।

"नैति तिर्यक्त्वमिश्रत्वे सत्त्वे तीर्थकृतो भवी" ति वचनादाहारकद्वयेन सह तीर्थकरेण विना मिश्रे ०, १४४, ४ ।

[1]तीर्थकरेण सहासंयते ७, १४५, ३ । देशे ७, १४५, ३ । प्रमत्ते ७, १४५, ३ । अप्रमत्ते ७, १४५, ३ । अपूर्वे ०, १३८, १० ।

अनिवृत्तौ नवांशेषु इत्थम्—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १६ | ८ | १ | १ | ६ | १ | १ | १ | १ |
| १३८ | १२२ | ११४ | ११३ | ११२ | १०६ | १०५ | १०४ | १०३ |
| १० | २६ | ३४ | ३५ | ३६ | ४२ | ४३ | ४४ | ४५ |

| सूक्ष्मे | उपशान्ते | क्षीणे | | सयोगे | अयोगे | |
|---|---|---|---|---|---|---|
| | | १ | २ | | १ | २ |
| १ | ० | २ | १४ | ० | ७२ | १३ |
| १०२ | १३८ | १०१ | ९९ | ८५ | ८५ | १३ |
| ४६ | १० | ४७ | ४९ | ६३ | ६३ | १३५ |

१ अनिबद्धायुषः प्रांत्यदेहिनो लघुकर्मणः । असंयतगुणस्थाने नरकायुः क्षयं व्रजेत् ॥ तिर्यगायुः क्षयं याति गुणस्थाने तु पंचमे । सप्तमे त्रिदशायुश्च दृङ्मोहस्यापि सप्तकम् ॥ दशैताः प्रकृतीः साधुः क्षयं नीत्वा विशुद्धधीः । धर्मध्याने कृताभ्यासः प्राप्नोति स्थानमष्टमम् ।

प्रभ्रश्योपशमश्रेणेर्यो मिथ्यात्वं विगाहते ।
तस्य प्रकृतयः साष्टाश्चत्वारिंशच्छतप्रमाः ॥ ६६ ॥
त्रयेऽन्यजन्मनि क्षीणे श्वभ्रातिर्यक्सुरायुषाम् ।
सत्क्षयो नृभवे प्राप्ते गुणस्थानेषु कथ्यते ॥ ६७ ॥
स्त्यानगृद्धित्रयं तिर्यग्द्वितयं नारकद्वयम् ।
सूक्ष्मं साधारणोद्योतावाद्यजातिचतुष्टयम् ॥ ६८ ॥
आतपः स्थावरा ज्ञेया षोडश प्रथमे क्षणे ।
अनिवृत्तेर्द्वितीयेंशेऽष्टकषाया मध्यमास्ततः ॥ ६९ ॥
षंढवेदो वधूवेदो हास्यषट्कं क्रमात्ततः ।
पुंवेदोऽतस्ततः क्रोधो मानोऽतो वंचना ततः ॥ ७० ॥
अनिवृत्तौ १६।८।१।१।६।१।१।१।१।
सूक्ष्मे लोभसंज्वालो द्वे निद्राप्रचले क्षणे ।
आद्ये क्षीणान्तिमे ज्ञानदृग्विघ्नस्याश्चतुर्दश ॥ ७१ ॥
१ । २ । १४ ।
अयोगस्य शरीराणि पंच बंधनपंचकम् ।
संघातपंचकं षट्कं संस्थानानां सुरद्वयम् ॥ ७२ ॥
त्रीण्यंगोपांगकान्यष्टौ स्पर्शाः संहननानि षट् ।
अपर्याप्तं रसाः पंच द्वौ गंधौ वर्णपंचकम् ॥ ७३ ॥
अयशोगुरुलघ्वादिचतुष्कं द्वे नभोगती ।
स्थिरद्वन्द्वं शुभद्वन्द्वं प्रत्येकं सुस्वरद्वयम् ॥ ७४ ॥
वेद्यमेकमनादेयं नीचदुर्भगनिर्म्मितः ।
उपांत्यसमये क्षीणाः द्वासप्ततिरिमाः समम् ॥ ७५ ॥
७२ प्रकृतयः ।

अंत्ये वेद्यं द्वयोरेकं नरायुर्नृद्वयं त्रसम् ।
सुभगादेयपर्याप्तपंचाक्षं तीर्थकर्त्तृता ॥ ७६ ॥
बादरोच्चयशांसीति त्रयोदश क्षणे क्षयम् ।
यस्य प्रकृतयो यांति तमयोगं स्तुवे त्रिधा ॥ ७७ ॥
१३ प्रकृतयः ।

---

किं प्राक् विच्छिद्यते बंधः किं पाकः किमुभौ समम् ।
किं स्वपाकेन बंधोऽन्यपाकेनोभयथापि किम् ॥ ७८ ॥
सान्तरोऽनंतरः किं किं बंधो द्वेधा प्रवर्त्तते ।
इत्येवं नवधा प्रश्नक्रमेणास्त्येतदुत्तरम् ॥ ७९ ॥
देवायुर्वैक्रियद्वन्द्वं देवाहारद्वयेऽयशः ।
इत्यष्टानां पुरा पाकः पश्चाद्बंधो विनश्यति ॥ ८० ॥

अत्रप्रथमतः बंधोच्छेदगुणस्थानांकसंख्या, पश्चात्तूदयविच्छेदगुणस्थानांकसंख्या द्रष्टव्या—

देवायुषः—बंध, गु. ७, गु. ४, उदय । वैक्रियिकद्वयस्य—८, ४ । देवद्वयस्य—८, ४ । आहारकद्वयस्य—८, ६ । अयशःकीर्त्तेः—६, ४ ।

हास्यरतिजुगुप्साभीमिथ्यापुंस्थावरातपाः ।
साधारणमपर्याप्तं सूक्ष्मं जातिचतुष्टयम् ॥ ८१ ॥
कोपादयोऽविसंज्वाललोभामर्त्यानुपूर्विका ।
इत्येकत्रिंशतो बंधपाकच्छेदौ समं मतौ ॥ ८२ ॥

एकस्मिन् गुणस्थाने बंधपाकद्वयोर्दर्शनाद्बंधपाकौ समं द्रष्टव्यौ । हास्यस्य ८, ८ । अरतेः ८, ८ । जुगुप्सायाः ८,

---

१ प्रथमत उदयविच्छेदः पश्चाद्बंधविच्छेदो भवति ।

८। भयस्य ८, ८। मिथ्यात्वस्य १, १। पुंवेदस्य ९, ९। स्थावरस्य १, १। आतपस्य १, १। साधारणस्य १, १। अपर्याप्तस्य १, १। सूक्ष्मस्य १, १। जातिचतुष्टयस्य १, १। यद्यपि सासने जातिचतुष्टयस्योदयस्तथापि न दोषस्तस्य मिथ्यादृष्टिसदृशत्वात्। नरानुपूर्व्याः ४, ४। अनंतानुबंधिचतुष्टयस्य २, २। अप्रत्याख्यानचतुष्टयस्य ४, ४। प्रत्याख्यानचतुष्कस्य ५, ५। क्रोधसंज्वलनस्य[1] ९, ९।

प्रकृतीनां तु शेषाणामेकाशीतेः शरीरिणः।
पूर्वं विच्छिद्यते बंधः पश्चात्पाकस्य विच्छिदा ॥ ८३ ॥
वेद्यांतरायदृक्ज्ञानरोधगोत्रभवायशः।
शोकारत्यंतलोभौ[2] स्त्रीषंडतीर्थविधायिताः ॥ ८४ ॥
श्वभ्रतिर्यङ्नरायूंषि श्वभ्रतिर्यङ्नृरीतयः।
तिर्यक्श्वभ्रानुपूर्व्यौ द्वे पंचाक्षौदारिकद्वये ॥ ८५ ॥
वर्णाद्यगुरुलघ्वादित्रसादीनां चतुष्टयम्।
षट्क संस्थानसंहत्योरुद्योतो द्वे नभोगती ॥ ८६ ॥
स्थिरादिपंचयुग्मानि निर्मित्तैजसकार्मणे।
एकाशीतेः पुरा बंधः पश्चात्पाको विनश्यति ॥ ८७ ॥

अत्रप्रथमतः पाकोच्छेदगणनांकसंख्या, पश्चात्तु बंधच्छेदगुणस्थानांकसंख्या द्रष्टव्या—

पंचानां ज्ञानावरणानां, चतुर्णां दर्शनावरणानां, पंचानामन्तरायाणां—पाकच्छेदः १२, बंधच्छेदः १०। यशःकीर्त्युच्चगोत्रयोः १४, १०। स्त्यानगृद्धित्रयस्य ६, २। निद्राप्रच-

---

१ मान माया संज्वलनस्यापि ९, ९। २ संचलनलोभः।

लयोः १२, ८। सद्वेद्यस्य १४, १३। असद्वेद्यस्य १४, ६। संज्वलनलोभस्य १०, ९। स्त्रीवेद्स्य ९, २। नपुंसकवेद्स्य ९, १। अरतिशोकयोः ८, ६। नरकायुषः ४, १। तिर्यगायुषः ५, २। मनुष्यायुषः १४, ४। नरकगतेः ४, १। तिर्यग्गतेः ५, २। मनुष्यगतेः १४, ४। पंचेन्द्रियजातेः १४, ८। औदारिकशरीरस्य १३, ४। तैजसस्य १३, ८। कार्मणस्य १३, ८। समचतुरस्रसंस्थानस्य १३, ८। मध्यमसंस्थानचतुष्टयस्य १३, २। हुंडस्य १३, १। औदारिकशरीराङ्गोपांगस्य १३, ४। वज्रर्षभनाराचसंहननस्य १३, ४। वज्रनाराचनाराचयोः ११, २। अर्द्धनाराचकीलकसंहननयोः ७, २। असंप्राप्तासृपाटिकासंहननस्य ७, १। वर्णादिचतुष्टयस्य १३, ८। नरकगत्यानुपूर्व्याः ४, १। तिर्यग्गत्यानुपूर्व्याः ४, २। अगुरुलघ्वादिचतुष्टयस्य १३, ८। उद्योतस्य ५, २। प्रशस्तविहायोगतेः १३, ८। अप्रशस्तविहायोगतेः १३, २। त्रसबादरपर्याप्तानां १४, ८। प्रत्येकशरीरस्य १३, ८। स्थिरस्य १३, ८। अस्थिरस्य १३, ६। शुभस्य १३, ८। अशुभस्य १३, ६। सुभगस्य १४, ८। दुर्भगस्य ४, २। सुस्वरस्य १३, ८। दुःस्वरस्य १३, २। आदेयस्य १३, ८। अनादेयस्य ४, २। निर्माणस्य १३, ८। तीर्थविधायितायाः १४, ८। नीचस्य ५, २।

इति तत्प्रकारः।

विक्रियाषट्कमाहारद्वयं श्वभ्रामरायुषी।
तीर्थकृच्चेति बध्यंते एकादशपरोदयात् ॥ ८८ ॥

नरकगतिनरकगत्यानुपूर्वी देवगतिदेवगत्यानुपूर्वी वैक्रियिकशरीरवैक्रियिकशरीरांगोपांगानां षण्णां बंधयोग्येषु गुणेषु परोदयेन बंधः, स्वोदयेन बंधस्य विरोधादाहारकद्वयमपि परोदयेन बध्यते। आहारकद्वयोदयरहितयोरप्रमत्तापूर्वयोर्बंधोपलंभात्। नारकामरायुषोरपि परोदयेन बंधस्तद्बंधोदययोः समानकाले वृत्तिविरोधात्। तीर्थंकरनाम्नोऽपि परोदयेन बंधः तीर्थंकरकर्मोदयसंभविगुणस्थानयोः सयोगायोगयोस्तद्बंधानुपलंभात्।

ज्ञानावृत्त्यंतरायस्था दश तैजसकार्मणे।
शुभस्थिरद्वये वर्णचतुष्कं दृक्चतुष्टयम् ॥ ८९ ॥
निर्माणागुरुलघ्वाह्वे मिथ्यात्वं सप्तविंशतिः।
बध्यन्ते स्वोदयाच्छेषा द्व्यशीतिः स्वपरोदयात् ॥ ९० ॥

ज्ञानावरणान्तरायस्था दश प्रकृतयो, दर्शनावरणस्य चतस्रो, बंधयोग्येषु गुणस्थानेषु स्वोदयेन बध्यन्ते। मिथ्यादृष्ट्यादिक्षीणकषायान्तेष्वेतासां निरन्तरोदयोपलंभात्। तैजसकार्मणवर्णगंधरसस्पर्शनिर्माणागुरुलघुस्थिरास्थिरशुभाशुभानि स्वोदयेनैव बध्यन्ते, ध्रुवोदयत्वात्। मिथ्यात्वस्यापि स्वोदयेनैव बंधो, मिथ्यात्वकारणषोडशप्रकृतिषु पाठात्, बंधोदययोः समानकाले वृत्तिविरोधाभावाद्वा। दर्शनावरणपंचकवेद्यद्वयकषायषोडशकनोकषायतिर्यगायुर्मनुष्यायुस्तिर्यग्गतिमनुष्यगत्येकद्वित्रिचतुःपंचेन्द्रियजात्यौदारिकौदारिकांगोपांगसंस्थान-

---

१ यतः कारणात् तयोरुदयकाले बंधो न भवति बंधकाल उदयो न भवति इत्यन्योन्यं विरोधो ज्ञेयः।

षट्कसंहननषट्कतिर्यग्गतिमनुष्यगतिप्रायोग्यानुपूर्व्युपघातपरघातो च्छ्वासातपोद्योतप्रशस्ताप्रशस्तविहायोगतित्रसस्थावरबादरसू- क्ष्मपर्याप्तप्रत्येकसाधारणसुभगदुर्भगसुस्वरादेयानादेययशः कीर्त्त्ययशःकीर्तिनीचोच्चगोत्रनामिकानां द्व्यशीतिप्रकृतीनां स्वपरोदयाद्बंधो द्रष्टव्यः, स्वोदयेनेव परोदयेनापि बंधाविरोधात् ।

कषायाः सकलाः सर्वाः ज्ञानदृष्ट्यंतरायगाः ।
उपघातजुगुप्से भीर्मिथ्यातैजसकार्मणे ॥ ९१ ॥
निर्माणागुरुलघ्वाह्व वर्णादीनां चतुष्टयम् ।
ध्रुवबंधा मताः सप्तचत्वारिंशदिमाः जिनैः ॥ ९२ ॥

ध्रुवबंधत्वमेतासां बंधयोग्यगुणस्थाने नित्यं बंधोपलंभात् ।

आयुश्चतुष्टयाहारद्वयतीर्थकरैर्युताः ।
चतुः पंचाशदेताश्च बंधं यांति निरन्तरम् ॥ ९३ ॥

ध्रुवबंधस्य निरन्तरबंधस्य च को विशेषः? महान् विशेषो यतः——

बंधयोग्यगुणस्थाने याः स्वकारणसन्निधौ ।
सर्वकालं प्रबध्यन्ते ध्रुवबंधा भवन्ति ताः ॥ ९४ ॥
बन्धकालो जघन्योऽपि यासामन्तर्मुहूर्त्तकः ।
बन्धसमाप्तितस्तत्र ता निरन्तरबंधनाः ॥ ९५ ॥
अन्त्ये संहतिसंस्थानपंचके स्थावरातपौ ।
षंढवेदो वधूवेद आद्यं जातिचतुष्टयम् ॥ ९६ ॥
शोकारत्यशुभोद्योतसूक्ष्मसाधारणायशः ।
अस्थिरासन्नभोरीतिदुर्भगापूर्णदुःस्वराः ॥ ९७ ॥

श्वभ्रद्वयमनादेयासाते त्रिंशच्चतुर्युताः ।
बध्यन्ते सांतरा बंधेऽन्याः सान्तरनिरन्तराः ॥ ९८ ॥
बंधो भूत्वा क्षणं यासामसमाप्तो निवर्त्तते ।
बंधापूर्तैः क्षणेनैताः सांतरा विनिवेदिताः ॥ ९९ ॥
अन्तर्मुहूर्त्तमात्रत्वाज्जघन्यस्यापि कर्मणाम् ।
सर्वेषां बंधकालस्य बंधः सामयिकोऽस्ति नो ॥ १०० ॥
तिर्यग्द्वयं नरद्वन्द्वं पुंवेदौदारिकद्वये ।
गोत्रे सातं सुरद्वन्द्वं पंचाक्षं वैक्रियद्वयम् ॥ १०१ ॥
परघातं रतिर्हास्यमाद्ये संस्थानसंहती ।
दश त्रसादियुग्मानामाद्यान्युच्छ्वाससद्गती ॥ १०२ ॥
द्वात्रिंशदिति जायंते ताः सांतरनिरन्तराः ।
यस्मादुभयथा बंधः सर्वदाप्युपलभ्यते ॥ १०३ ॥
उच्चनृत्वे न बध्नंति तेजःपवनकायिकाः ।
स्त्रीषंढकोदये साधुर्नाहारार्द्धिं कदाचन ॥ १०४ ॥
मिथ्यात्वभावतो जातु मिथ्यात्वबलभाविषु ।
सासनो जायते नैव श्वाभ्रतेजोनिलांगिषु ॥ १०५ ॥

बंधोदयोदीरणसत्क्षयाणां,
विचारणां यो विदधाति नित्यम् ।
विविक्तमात्मानमपास्तकर्मा,
ज्ञानात्मकं सोऽमितगत्युपैति ॥ १०६ ॥

इति श्रीमदमितगत्याचार्यप्रणीते पंचसंग्रहग्रन्थे
कर्मबंधस्तवाख्यस्तृतीयः
परिच्छेदः ।

---

१ द्वात्रिंशत् । २ एकसमयवर्ती । ३ सांतरोऽपि निरंतरोऽपि बंधः ५४, निरंतरबंधः ३४, सांतरबंध ३२, एवं १२० ।

# अथ चतुर्थः परिच्छेदः ।

जयताज्जनितानंदं जिनेन्द्रवचनामृतम् ।
जन्ममृत्युजरातृष्णाश्रमतापापनोदनम् ॥ १ ॥
दृष्टिवादादपोद्धृत्य वक्ष्यन्ते सारयोगिनः ।
श्लोकाः जीवगुणस्थानगोचराः कतिचिन्मया ॥ २ ॥

ये सन्ति यस्मिन्नुपयोगयोगाः,
सप्रत्ययास्तान्निगदामि तत्र ।
जीवे गुणे वा परिणामतोऽह-
मेकत्र बंधादिविधिं च किंचित् ॥ ३ ॥

संत्येकाक्षेषु चत्वारि जीवानां विकलेषु षट् ।
पंचेन्द्रियेषु चत्वारि स्थानानीति चतुर्दश ॥ ४ ॥
तिर्यग्गतावशेषाणि द्वे संज्ञिस्थे गतित्रये ।
जीवस्थानानि नेयानि संत्येवं मार्गणास्वपि ॥ ५ ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| न. २ | ति. १४ | म. २ | दे. २ | ए. ४ | द्वी. २ | त्री. २ |
| च. २ | पं. ४ | पृ. ४ | अ. ४ | ते. ४ | वायु. ४ | व. ४ |
| त्रस १० | स. म. १ | अस. म. १ | उ. म. १ | अनु. म. १ | स. व. १ | अस. व. १ |
| उ. व. १ | अनु. व. ५ | औ. ७ | औ. मि. ८ | वै. १ | वै. मि. १ | आ. १ |
| आ. मि. १ | का. ८ | स्त्री ४ | पुं ४ | न १४ | क्रो १४ | मा १४ |
| माया १४ | लोभ १४ | कुम १४ | कुश्रु १४ | विभंग १ | म २ | श्रु २ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अ | मनः | के | सामा. | छेदो | परि. | सूक्ष्म | |
| २ | १ | १ | १ | १ | १ | १ | |
| यथा. | संय. | असं. | च | विग्रह च. | अचक्षु | अव. | |
| १ | १ | १४ | ३ | ६ | १४ | २ | |
| के | कृष्णा | नील | कापोत | तेजो. | पद्म | शु. | |
| १ | १४ | १४ | १४ | २ | २ | २ | |
| भ | अ | औप. द. | औ. विग्रह | वेदक | क्षा. | सासन | |
| १४ | १४ | १ | २ | २ | २ | २ | |
| सा. वि. | मिश्र | मिथ्या | संज्ञी | असं | अ. वि. | आहा | अनाहा |
| ८ | १ | १४ | २ | २ | १२ | १४ | ८ |

तत्प्रकारः सूच्यते——

श्वभ्रमानवदेवेषु द्वौ द्वौ संज्ञिपर्याप्तापर्याप्तौ, तिर्यक्षु चतुर्दशापि जीवसमासाः, एकाक्षे बादरसूक्ष्मपूर्णापूर्णाश्चत्वारः, द्वित्रिचतुरक्षेषु निजौ पर्याप्तापर्याप्तौ द्वौ, पंचाक्षे संज्ञ्यसंज्ञिपर्याप्तापर्याप्ताश्चत्वारः, पंचस्थावरकायेषु प्रत्येकं प्रथमाश्चत्वारः, त्रसकायेषु द्व्यक्षाद्या दश, आद्येषु सप्तसु योगेषु एकः संज्ञी पूर्णः, अष्टमे तु पंच द्व्यक्षाद्याः पर्याप्ताः, औदारिके सप्त पर्याप्ताः, मिश्रे सप्तापर्याप्ताः [1]संज्ञिपर्याप्तोऽष्टमः, वैक्रियिकाहारकाहारकमिश्रेष्वेकः संज्ञी पर्याप्तः, वैक्रियिकमिश्रे संज्ञ्यपर्याप्तः, कार्मणे सप्तापर्याप्ताः संज्ञिपर्याप्तोऽष्टमः, स्त्रीपुंवेदयोः संज्ञ्यसंज्ञिपूर्णापूर्णाश्चत्वारः, षंढवेदे सर्वे, कषायचतुष्के समस्ताः, मतिश्रुताज्ञानयोर्निःशेषाः, विभंगे संज्ञ्येकः पूर्णः, मतिश्रुतावधिषु संज्ञिपूर्णापूर्णौ, मनःपर्ययकेवलयोः संज्ञ्येकः पूर्णः, संयमपंचकदेशसंयमयोरेकः संज्ञीपूर्णः, असंयमे सकलाः,

१ सयोगकेवलिनि । २, ३ सयोगकेवलिनि ।

चक्षुर्दर्शने चतुरक्षाद्याः पर्याप्तास्त्रयः, विग्रहगत्यपेक्षया षट् ते पर्याप्तापर्याप्ताः, अचक्षुर्दर्शने सर्वे, अवधिदर्शने संज्ञिपर्याप्तापर्याप्तौ द्वौ, केवलदर्शने पूर्णः संज्ञ्येकः, कृष्णनीलकापोतासु सर्वे, पीतपद्मशुक्ललेश्यासु संज्ञिपूर्णापूर्णौ द्वौ, भव्याभव्ययोः प्रत्येकमशेषाः, औपशमिकदर्शने संज्ञ्येकः, विग्रहगत्यपेक्षया पूर्णापूर्णौ द्वौ संज्ञिनौ, वेदकक्षायिकसासनेषु संज्ञिपूर्णापूर्णौ, सासने तु विग्रहगत्यपेक्षया सप्तापर्याप्ताः संज्ञीपूर्णोऽष्टमः, मिश्रे संज्ञ्येकः पूर्णः, मिथ्यादृष्टौ सर्वे, संज्ञिनि द्वौ संज्ञिपूर्णापूर्णौ, असंज्ञिनि द्वावसंज्ञिनी पूर्णापूर्णौ, विग्रहगत्यपेक्षया द्वादश संज्ञिपूर्णापूर्णवर्जिताः, आहारके समस्ताः, अनाहारके सप्तापर्याप्ताः संज्ञिपर्याप्तोऽष्टमः । एवं मार्गणासु जीवसमासाः योजिताः ।

---

## मार्गणायां गुणस्थानानि ।

सर्वाणि नृगतौ पंच तिर्यक्षु श्वाभ्रदेवयोः ।
गुणस्थानानि चत्वारि मार्गणास्वपरास्विति ॥ ६ ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| नरक ४ | ति ५ | मनु. १४ | देव ४ | एके २ | द्वी २ | त्रीन्द्रि. २ |
| चतु २ | पंचे १४ | पृथि. २ | अपकाय २ | तेजः १ | वायु. १ | वन. २ |
| त्रस १४ | स. म. १३ | अ. म. १२ | उभय म. १२ | अनु. म. १३ | स. व. १३ | अ. व. १२ |
| उ. व. १२ | अ. व १३ | औ १३ | औ. मि. ४ | वै. ४ | वै. मि. ३ | आ. १ |

---

१ "नहिसासणो अपुण्णो साहारण सहुमगेयतेउदुगे" इति गोम्मटसारवचनात् सूक्ष्मापर्याप्तकभेदो नास्ति इत्यत्र चिन्तनीयम् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| आ मि. | का. | स्त्री | पुं | नपुंस | क्रो. | मान |
| १ | ४ | ९ | ९ | ९ | ९ | ९ |
| माया | लो. | कुम | कुश्रु. | वि. | म. | श्रु. |
| ९ | १० | २ | २ | २ | ९ | ९ |
| अ. | मनः | के. | सामा | छेदो. | परि. | सूक्ष्म |
| ९ | ७ | २ | ४ | ४ | २ | १ |
| यथा | सं. | असं. | च. | अ. | अव | के |
| ४ | १ | ४ | १२ | १२ | ९ | २ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| कृष्ण | नील. | कापो. | तेजो. | पद्म | शु | भ. | अभ. | औ. |
| ४ | ४ | ४ | ७ | ७ | १३ | १२ | १ | ८ |
| वेदक | क्षा. | सा. | मिश्र. | मि. | सं | अ. | आ. | अ. |
| ४ | ११ | १ | १ | १ | १२ | २ | १३ | ५ |

तत्प्रकारः सूच्यते——

नारकसुधाशिकयोश्चत्वार्याद्यानि गुणस्थानानि, तिर्यक्षु पंच, मनुष्येषु सर्वाणि, एकद्वित्रिचतुरक्षेषु द्वे प्रथमे, पंचाक्षेषु समस्तानि, धरावारिवनस्पतिकायेषु द्वे प्रथमे, तेजोवातकाययोरेकमाद्यं, त्रसेषु चतुर्दश, मनोवचनयोगयोराद्ययोरन्त्ययोरौदारिककाययोगे च त्रयोदश सयोग्यंतानि, मध्यमयोः क्षीणान्तानि द्वादश, कार्मणौदारिकमिश्रयोः प्रथमद्वितीयचतुर्थसयोग्याख्यानि चत्वारि, वैक्रियिके प्रथमानि चत्वारि, तन्मिश्रे मिश्रं विना त्रीणि, आहारकाहारकमिश्रयोरेकं प्रमत्ताख्यं, वेदत्रिके प्रत्येकं नवाद्यानि, आद्यकषायत्रिके नवाद्यानि, लोभे दश, अज्ञानत्रये द्वे मिथ्यादृष्टिसासने, प्रथमे ज्ञानत्रये प्रत्येकं नवासंयतादीनि, मनःपर्यये प्रमत्तादिक्षीणकषायान्तानि सप्त, केवले द्वे अंत्ये, सामायिकछेदोपस्थापनयोश्चत्वारि प्रमत्तादीनि, परिहारे द्वे प्रमत्ताप्रमत्ते, एकं सूक्ष्मे

सूक्ष्मकषायाख्यं, यथाख्याते चत्वार्युपशांतादीनि, एकं संयमासंयमे पंचमं, असंयमे चत्वार्याद्यानि, चक्षुर्दर्शनाचक्षुर्दर्शनयोर्द्वादशाद्यानि, अवधिदर्शने नवासंयतादीनि, केवलदर्शने द्वे अंत्ये, आद्ये लेश्यात्रये चत्वार्याद्यानि, तेजःपद्मयोराद्यानि सप्त, शुक्लायां त्रयोदश सयोग्यंतानि, द्वादशाद्यानि भव्ये, एकमभव्ये प्रथमं, औपशमिकेऽष्टासंयतादीनि, वेदके चत्वार्यसंयतादीनि, क्षायिके चतुर्थादीन्येकादश, सासनमिश्रमिथ्यादृष्टिषु प्रत्येकमेकं स्वकीयं, संज्ञिनि द्वादश क्षीणान्तानि, असंज्ञिनि द्वे प्रथमे, आहारके त्रयोदशाद्यानि मिथ्यादृष्टिसासनाविरतयोग्ययोग्याख्यानि पंचानाहारके । एवं मार्गणासु गुणस्थानानि योजितानि ।

संति मर्त्यगतौ सर्वे नवान्यासु विना त्रिभिः ।
नेतव्या मार्गणास्वेवमुपयोगा यथाक्रमम् ॥ ७ ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| नरक ९ | ति. ९ | मनु. १२ | देव. ९ | ए. ३ | द्वी. ३ | त्री. ३ |
| चतु ४ | पं. १२ | पृ. ३ | अप् ३ | तेजो ३ | वायु ३ | व ३ |
| त्रस १२ | स. म. १२ | अस. म १० | उ. म. १० | अनु. म १२ | स. व. १२ | अ. व. १० |
| उ. व. १० | अ. व. १२ | औ १२ | मिश्र ९ | वै ९ | मिश्र ७ | आ. ६ |
| मिश्र ६ | का. ९ | स्त्री ९ | पुं. १० | नपुं. ९ | क्रो. १० | मा. १० |
| माया १० | लोभ १० | कुम ५ | कुश्रु ५ | विभं. ५ | म. ७ | श्रु ७ |
| अ. ७ | मनः ७ | के. २ | सामा. ७ | छेदो. ७ | परि. ६ | सू ७ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| यथा | संय. | असं | च. | अ. | अव. | केव. | | |
| ९ | ६ | ९ | १० | १० | ७ | २ | | |
| कृ. | नी. | का. | तेजो. | प. | शु. | भ. | अ. | औ. |
| ९ | ९ | ९ | १० | १० | १२ | १० | ५ | ६ |
| वेद. | क्षा. | सा. | मिश्र. | मि. | सं. | अ. | आ. | अ. |
| ७ | ९ | ५ | ६ | ५ | १० | ४ | १२ | ९ |

तत्प्रकारः सूच्यते——

केवलद्वयमनःपर्ययवर्जिता नवोपयोगाः श्वभ्रतिर्यग्देवेषु, मनुष्येषु सर्वे, मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनान्येकद्वित्र्यक्षेषूपयोगास्त्रयः, चतुरक्षेषु चक्षुर्दर्शनाधिकास्ते चत्वारः, पंचाक्षेषु द्वादश, पृथिव्यप्तेजोवायुवनस्पतिष्वेकाक्षोक्तास्त्रयः, त्रसेषु सर्वे, मनोवचोयोगयोराद्ययोरन्त्ययोश्च द्वादश, मध्यमेषु केवलद्वयहीना दश, औदारिके निखिलाः, तन्मिश्रकार्मणयोर्मनःपर्ययविभंगचक्षुर्दर्शनहीना नव, वैक्रियिके मनःपर्ययकेवलद्वयहीना नव, तन्मिश्रे मनःपर्ययकेवलद्वयविभंगचक्षुर्दर्शनहीनाः सप्त, आहारकद्वये प्रथमज्ञानत्रयचक्षुरचक्षुरवधिदर्शनानि षट्[१], स्त्रीषंढवेदयोस्तुर्यज्ञानकेवलद्वयवर्जिता नव, पुंवेदे विकेवलद्वया दश, चतुर्षु कषायेषु पुंवेदोक्ता दश, त्रिष्वज्ञानेष्वज्ञानत्रिकचक्षुरचक्षुर्दर्शनानि पंच, प्रथमज्ञानचतुष्के केवलद्वयाज्ञानत्रिकहीना सप्त, केवले केवलद्वयं, सामायिकछेदोपस्थापनसूक्ष्मसाम्यरायेष्वज्ञानत्रिककेवलद्वयहीनाः सप्त, परि-

१ आहारकयोगिनोमुनेः मनःपर्ययाभावात् तदुक्तंगोम्मटसारजीवकांडे “ मणपज्जवपरिहारो पढमुवसम्मत्तदोण्णिआहारा । एदेसु एक्कपगदेणत्थित्तिअसेसयं जाणे ” ॥ २ मनःपर्ययज्ञानिनो मुनेः स्त्रीनपुंसकवेदोदयाभावात् तदुक्तं गो० कर्मकाण्डे मणपज्जवपरिहारेणवरिपासंढित्थिहारदुगं ।

हारदेशसंयमयोराद्यज्ञानत्रयचक्षुरचक्षुरवधिदर्शनानि षट्, यथाख्याते पंचज्ञानचतुर्दर्शनानि नव, असंयमे तुर्यबोध-केवलद्वयहीना नव, चक्षुरचक्षुर्दर्शनयोर्द्विके केवलद्वयहीना दश, अवधिदर्शने केवलयुग्माज्ञानत्रिकहीनाः सप्त, केवले केवलद्वयं, आद्यलेश्यात्रये केवलद्वयतुर्यबोधहीना नव, तेजः पद्मलेश्ययोः केवलद्वयविवर्जिता दश, शुक्लायां सर्वे, भव्ये केवलद्वयोना दश, अभव्ये चक्षुरचक्षुरज्ञानत्रिकाणि पंच, औ-पशमिकसम्यक्त्वे प्रथमज्ञानत्रयचक्षुरचक्षुरवधिदर्शनानि षट्, वेदके केवलयुगाज्ञानत्रिकहीनाः सप्त, अज्ञानत्रयहीनाः क्षायिके नव, सासनमिथ्यादृशोश्चक्षुरचक्षुर्दर्शनाज्ञानत्रिकाणि पंच, मिश्रे प्रथमज्ञानत्रिकचक्षुरचक्षुरवधिदर्शनानि मिश्राणि षट्, संज्ञिनि केवलद्वयहीना दश, मतिश्रुताज्ञानचक्षुरचक्षुर्दर्शनानि चत्वारोऽसंज्ञिनि, आहारे सर्वे, अनाहारके विभंगमनःपर्यय-चक्षुर्दर्शनहीना नव। मार्गणासु एवमुपयोगा निरूपिताः।

---

अथ योगा निरूप्यन्ते——

त्रयोदश मनुष्यत्त्वेकादश गतित्रये।
योगा योज्याः परेष्वेवमिन्द्रियादिषु कोविदैः॥ ८॥

स्पष्टं सूच्यते——

| | | | | | | |
|---|---|---|---|---|---|---|
| नरक<br>११ | ति.<br>११ | मनु.<br>१३ | दे.<br>११ | ए.<br>३ | द्वी.<br>४ | त्री.<br>४ |
| च.<br>४ | पं.<br>१५ | पृ.<br>३ | अ.<br>३ | तेज.<br>३ | वायु<br>३ | वन.<br>३ |
| त्रस<br>१५ | स. म.<br>१ | अ. म.<br>१ | उ. म.<br>१ | अ.<br>१ | स. व.<br>१ | अ. व.<br>१ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| उ. व. | अ. व. | औदा. | औ. मिश्र | वै | वै. मिश्र. | आहा. | |
| १ | १ | १ | १ | १ | १ | १ | |
| आ. मिश्र | का. | स्त्री. | पुं. | नपुं. | क्रो. | मा. | |
| १ | १ | १३ | १५ | १३ | १५ | १५ | |
| माया | लोभ | कुमति | कुश्रुत | विभं. | मति. | श्रु. | अव. |
| १५ | १५ | १३ | १३ | १० | १५ | १५ | १५ |
| मनः | केवल. | सामा. | छेदो. | परि. | सू. | यथा. | संयमासं |
| ९ | ७ | ११ | ११ | ९ | ९ | ११ | ९ |
| असंय. | चक्षु. द. | अच. द. | अव. द. | के. द. | कृ. | नील. | का. |
| १३ | १२ | १५ | १५ | ७ | १३ | १३ | १३ |
| तेजो. | पद्म. | शु. | भव्य. | अभ. | औप. | वेदक | क्षायिक |
| १५ | १५ | १५ | १५ | १३ | १३ | १५ | १५ |
| सास. | मिश्र | मि. | सं. | अ. | आ. | अ. | |
| १३ | १० | १३ | १५ | ४ | १४ | १ | |

तत्प्रकारः सूच्यते——

गतावनाहारकद्वयाः[१] श्वभ्रदेवयोरेकादश योगाः, निराहारयुगवैक्रियिकयुगाः तिर्यक्ष्वेकादश, वैक्रियिकद्वयहीना मनुष्येषु त्रयोदश, एकाक्षे कार्मणौदारिकौदारिकमिश्राभिधास्त्रयः, विकलेष्वसत्यमृषावचोयोगसहितास्ते चत्वारः, पंचाक्षे सकलाः, पंचसु स्थावरेष्वेकाक्षोक्तास्त्रयः, त्रसेषु सर्वे, योगेष्वेको निजोनिजः, स्त्रीनपुंसकयोर्निराहारकद्वयास्त्रयोदश, पुंसि पंचदश, कषायचतुष्के सर्वे, मत्यज्ञानश्रुताज्ञानयोर्निराहारकास्त्रयोदश, विभंगे मिश्रत्रिकाहारककार्मणहीना दश, मतिश्रुतावधिषु सर्वे, तुर्यबोधे मनोवचश्चतुष्कौदारिकयोगा नव, आद्यंतमनोवचोयोगौदारिकद्वयकार्मणाः सप्त केवले, आद्यसंयमयो-

१ आहारकद्वयौदारिकद्वयहीनाः ।

वैक्रियिकमिश्रत्रिकोनाः, यथाख्याते वैक्रियिकद्वयाहारकद्वयोनाः, परिहारसूक्ष्मसांपरायदेशसंयमेषु मनोवचनौदारिकयोगा नव, त्रयोदशासंयमे निराहारकद्वयाः, चक्षुर्दर्शने मिश्रत्रिकहीना द्वादश, अचक्षुरवधिदर्शनयोः सर्वे, केवलदर्शने केवलज्ञानोक्ताः, कृष्णनीलकापोतासु निराहारकद्वयास्त्रयोदश, तेजःपद्मशुक्लासु सर्वे, भव्ये सर्वे, अभव्ये निराहारकद्वयास्त्रयोदश, औपशमिकसम्यक्त्वसासनामिथ्यादृष्टिषु आहारकद्वयहीनास्त्रयोदश, वेदकक्षायिकयोः सर्वे, मिश्रे मिश्रत्रिकाहारककार्मणहीना दश, संज्ञिनि सर्वे, असंज्ञिनि कार्मणौदारिकद्वयांत्यवचोयोगाश्चत्वारः, आहारके निःकार्मणाश्चतुर्दश, एकः कार्मणोऽनाहारके । एवं मार्गणासु योगाः योजिताः ।

---

जीवसमासेषूपयोगा उच्यन्ते———

जीवस्थानेषु चत्वार उपयोगाः द्वयोर्बुधैः ।
त्रय एकादशस्विष्टा एकत्र द्वादशस्फुटम् ॥ ९ ॥

तदित्थम्———११, ३ । २, ४ । १, १२ ।

तत्प्रकारः सूच्यते———

तत्र मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनान्येकादशसु त्रयः, मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनचक्षुर्दर्शनानि चतुरिन्द्रियासंज्ञिनोः पूर्णयोर्द्वयोश्चत्वारः, संज्ञिनि पूर्णे द्वादशोपयोगाः ।

---

जीवस्थानेषु योगा उच्यन्ते———

---

१ संज्ञिपंचेन्द्रियापर्याप्तस्य एकजीवापेक्षया जघन्येन त्रय उपयोगाः सम्भवन्ति नानाजीवापेक्षया तु सप्त । इति विचारणीयं ।

द्वौ चतुर्षु नवस्वेकः समस्ताः संति संज्ञिनि ।
जीवस्थानेषु विज्ञेया योगा योगविशारदैः ॥ १० ॥

तदित्थम्———९, १ । ४, २ । १, १५ ।

तत्प्रकारः सूच्यते———

द्वयोरेकेन्द्रिययोः पर्याप्तयोरौदारिक एकः, सप्तस्वपर्याप्तेष्वौदारिकमिश्र एकः इति । समुदायेन नवस्वेको योगो द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिषु पर्याप्तेषु चतुर्षु द्वौ कायवाग्योगौ, संज्ञिनि पर्याप्ते पंचदश योगाः ।

---

पंच षट् सप्त ज्ञेया द्वौ द्वित्रिसप्तद्विषु क्रमात् ।
गुणस्थानेषु विद्वद्भिरुपयोगा भवंत्यमी ॥ ११ ॥

त इत्थम्—५।५।६।६।६।७।७।७।७।७।७।७।२।२।

तत्राज्ञानत्रयचक्षुरचक्षुर्दर्शनानि मिथ्यादृष्टिसासनयोर्द्वयोः प्रत्येकं पंच, ज्ञानत्रयचक्षुरचक्षुरवधिदर्शनानि मिश्रासंयतदेशसंयतेषु त्रिषु षडेकशः, परं मिश्रे ज्ञानान्यज्ञानमिश्राणि, चत्वारि ज्ञानानि त्रीणि दर्शनानि सप्तसु यतिषु सप्तैकशः, केवलज्ञानकेवलदर्शने द्वयोः केवलिनोः प्रत्येकं द्वावुपयोगौ ।

[1]३, २ । ३, २ । ३, ३ । ३, ३ । ३, ३ । ४, ३ । ४, ३ । ४, ३ । ४, ३ । ४, ३ । ४, ३ । ४, ३ ।
सयोगायोगयोः १, १ । १, १ ।

---

आद्ययोरव्रते योगा विज्ञातव्यास्त्रयोदश ।
दश मिश्रे प्रमत्ताख्य एकादश विचक्षणैः ॥ १२ ॥

---

१ अत्र प्रथमतः ज्ञानोपयोगसंख्यांका पश्चाद्दर्शनोपयोगसंख्यांकाः । एवं सयोगायोगयोरपि ।

गुणानां सप्तके योगा नव सप्त मताः जिनैः ।
सयोगे योगनिर्मुक्ते न योगा योगिपूजिते ॥ १३ ॥
१३।१३।१०।१३।९।११।९।९।९।९।९।९।७।०।

मिथ्यादृक्सासनाव्रतेषु त्रिष्वाहारकद्वयहीनाः त्रयोदश, मिश्रे मिश्रद्वयाहारकद्वयकार्मणहीना दश, प्रमत्ते वैक्रियिकद्वयौदारिकमिश्रकार्मणहीना एकादश, देशसंयताप्रमत्तादिषु सप्तसु वैक्रियिकद्वयाहारकद्वयौदारिकमिश्रकार्मणहीना नव, आद्यंतमानसद्वयाद्यंतवचनद्वयौदारिकद्वयकार्मणलक्षणा योगिनि सप्त योगाः ।

योगिन्यौदारिको दंडे मिश्रो योगः कपाटके ।
कार्मणो जायते तत्र, प्रतरे लोकपूरणे ॥ १४ ॥

---

मिथ्यात्वाविरती योगः कषायः कथितो जिनैः ।
चत्वारः प्रत्ययाः मूले कर्मबन्धविधायिनः ॥ १५ ॥
उत्तराः प्रत्ययाः पंच द्वादश प्रत्ययातिगैः ।
जिनैः पंचदश प्रोक्ताः क्रमतः पंचविंशतिः ॥ १६ ॥
सामान्येन विशेषेण मौलिकाः प्रत्ययाः बुधैः ।
गुणस्थानेषु सर्वेषु योजनीया यथागमम् ॥ १७ ॥
मिथ्यात्वयुजि चत्वारो निर्मिथ्यात्वा गुणत्रये ।
विरत्यविरतिर्मिश्रा देशे द्वौ गुणपंचके ॥ १८ ॥
गुणानां त्रितये योगः केवलः प्रत्ययः स्मृतः ।
अन्तिमः प्रत्ययातीतः कर्मकक्षानिकर्त्तनः ॥ १९ ॥
दशत्रसविरत्याढ्या स्थावराविरतिर्मता ।
सार्द्धं योगकषायाभ्यां संयतासंयते त्रयः ॥ २० ॥

नानैकसमयेप्येते नानैकप्राणभागिनाम् ।
गुणस्थानेषु सर्वेषु प्रथमाः प्रत्यया मताः ॥ २१ ॥
तदित्थम्—४।३।३।३।३।२।२।२।२।२।१।१।१।० ।
उत्तरप्रत्ययानाह—
आद्यं सांशयिकं ज्ञेयं प्रतीपाज्ञानिके परे ।
विनयैकान्तिके चान्ये मिथ्यात्वं पंचधा मतम् ॥ २२ ॥
सर्वज्ञेन विरागेण जीवाजीवादि भाषितम् ।
सत्यं न वेति संदेहस्तत्र सांशयिकं स्मृतम् ॥ २३ ॥
केवली कवलाहारः सग्रन्थो मोक्षसाधकः ।
जीवविध्वंसनं धर्मो विपरीतमिदं विदुः ॥ २४ ॥
हिताहितापरीक्षायामाज्ञानिकमुदाहृतम् ।
सर्वेषु देवधर्मेषु साम्यं वैनयिकं मतम् ॥ २५ ॥
इदमेवेत्थमेवेति सर्वथा धर्मधर्मिणोः ।
ग्राहिका शेमुषी प्राज्ञैरैकान्तिकमुदाहृतम् ॥ २६ ॥
जीवानां हिंसने षण्णामिन्द्रियाणामयंत्रणे ।
द्वादशाविरतिर्भेदा गदिता गतकल्मषैः ॥ २७ ॥
चत्वारो मनसा योगाश्चत्वारो वाचिका मताः ।
कोविदैः कायिकाः सप्त योगाः पंचदशेत्यतः ॥ २८ ॥
तैजसेन यतः कर्म बध्यते न न जीर्यते ।
तैजसो न ततो योगो गीयते योगवेदिभिः ॥ २९ ॥
सदा निरुपभोगस्य क्षण एको जघन्यतः ।
उक्ता प्रकर्षतस्तस्य षट्षष्टिः सागरा स्थितिः ॥ ३० ॥
कषायाः षोडश प्राज्ञैर्नोकषाया नवेरिताः ।
ईषद्भेदो न भेदोऽस्ति कषायाः पंचविंशतिः ॥ ३१ ॥

समुदिताः ५७ ।

गुणेष्वेतानाह—

प्रथमे पंचपंचाशत् पंचाशत्प्रत्ययाः परे ।
त्रिचत्वारिंशदन्यत्र षट्चत्वारिंशदन्यतः ॥ ३२ ॥
सप्तत्रिंशच्चतुर्द्विद्वियुक्ता विंशतयस्त्रिषु ।
षोडशैकैकनिर्मुक्ता यावत्ते नवमे दश ॥ ३३ ॥
दश सूक्ष्मे नव प्रोक्ताः प्रशान्तक्षीणयोर्द्वयोः ।
सयोगे सप्त निर्योगः प्रतीतः प्रत्ययोज्झितः ॥ ३४ ॥
इति नानाक्षणेष्वेते[१] नानाजीवेषु कोविदैः ।
उत्तराः प्रत्यया नेया गुणस्थानेषु यत्नतः ॥ ३५ ॥

तदेवम्—

अष्टसु गुणस्थानेषु ५५।५०।४३।४६।३७।२४।२२।२२।
अनिवृत्तौ[२] १६।१५।१४।१३।१२।११।१० ।
सूक्ष्मादिषु पंचसु १०।९।९।७।० ।

तत्प्रकारः सूच्यते—

आहारकद्वयोना मिथ्यादृष्टौ, ते मिथ्यात्वपंचकहीनाः सासने, प्रथमकषायचतुष्कवैक्रियिकौदारिकमिश्रकार्मणहीना मिश्रे, वैक्रियिकौदारिकमिश्रकार्मणयुक्ताश्चतुर्थे, वैक्रियिकद्वयौदारिकमिश्रकार्मणद्वितीयकषायचतुष्कत्रसाविरतिहीनाः पंचमे, तृतीयकषायचतुष्कैकादशाविरतिहीना आहारकद्वययुक्ताः षष्टे, आहारकद्वयहीनाः सप्तमाष्टमयोः, हास्यादिषट्केन षंढवेदेन

१ एकजीवस्य सर्वे प्रत्ययाः एकदैव न सम्भवन्ति । बहुषुजीवेष्वेकक्षणे, एकजीवस्य च अनेकक्षणेषु सम्भवितुमर्हन्ति । २ अनिवृत्तिकरणभागेषु ।

स्त्रीवेदेन पुंवेदेन क्रोधेन मानेन मायया हीनाः क्रमेण सप्त-स्वनिवृत्तिक्षणेषु, सूक्ष्मे त एव दश, लोभहीनाः शांतक्षीण-योर्नव, आद्यंतमनोवचनौदारिकद्वयकार्मणाभिधाः सप्त प्रत्ययाः सयोगे ।

---

मार्गणायां प्रत्ययाः दीयन्ते—

पंचाशद्द्वित्रिकैकाग्रा स्वस्तिर्यक्श्वाभ्ररीतिषु ।
नृगतौ पंचपंचाशन्मार्गणास्वपरास्वपि ॥ ३६ ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| नरक | तिर्य. | मनुष्य | देव. | एकें. | द्वीन्द्रि. | त्रीन्द्रि. | | |
| ५१ | ५३ | ५५ | ५२ | ३८ | ४० | ४१ | | |
| चतु. | पं. | पृ. | अप् | तेजो | वायु | व. | | |
| ४२ | ५७ | ३८ | ३८ | ३८ | ३८ | ३८ | | |
| त्रस | स. म. | अस. म. | उ. म. | अनु. म. | स. व. | अ. व. | | |
| ५७ | ४३ | ४३ | ४३ | ४३ | ४३ | ४३ | | |
| उ. व. | अ. व. | औ. का. | औ.मि.का. | वै. का. | वै. मि.का. | आ.का. | | |
| ४३ | ४३ | ४३ | ४३ | ४३ | ४३ | १२ | | |
| आ.मि.का. | का. का. | स्त्री. | पुं. | नपुं. | क्रो. | मा. | | |
| १२ | ४३ | ५३ | ५७ | ५५ | ४५ | ४५ | | |
| माया | लोभ | कुमति | कुश्रुत | विभं. | मति. | श्रु. | | |
| ४५ | ४५ | ५५ | ५५ | ५२ | ४८ | ४८ | | |
| अव. | मनः | केवल. | सामा. | छेदो. | पार. | सू. | | |
| ४८ | २० | ७ | २४ | २४ | २२ | १० | | |
| यथा. | संयमा. | असंय. | चक्षु. द. | अचक्षु. | अव. | के. द. | कृ. | |
| ११ | ३७ | ५५ | ५७ | ५७ | ४६ | ७ | ५५ | |
| नील. | का. | तेजो. | पद्म. | शु. | भव्य. | अभ. | औप. | |
| ५५ | ५५ | ५७ | ५७ | ५७ | ५७ | ५५ | ४६ | |
| वेदक | क्षायिक | सासा. | मिश्र | मि. | सं. | अ. | आ. | अना |
| ४८ | ४८ | ५० | ४३ | ५५ | ५७ | ४५ | ५६ | ४३ |

तत्प्रकारः सूच्यते------

स्त्रीपुंवेदौदारिकद्वयाहारकद्वयोना नरकगत्यां ५१, वैक्रियिकद्वयाहारकद्वयोनास्तिर्यग्गत्यां ५३, वैक्रियिकद्वयोनाः नृगत्यां ५५, नपुंसकवेदौदारिकद्वयाहारकद्वयोना देवगत्यां ५२, रसनघ्राणचक्षुःश्रोत्रमनः स्त्रीपुंवेदसर्वमनोवचोयोगवैक्रियिकाहारकद्वयोना एकाक्षेषु ३८, त एवांत्यभा[1]षारसनाभ्यां सह द्व्यक्षे ४०, घ्राणेन सह त्र्यक्षे ४१, चक्षुषा सह चतुरक्षे ४२, त्रसपंचाक्षयोः सर्वे ५७, एकाक्षोक्ताः स्थावरेषु ३८, विमुच्याहारकद्वयं शेषेषु[2] निजं निजं हित्वा शेषहीनाः ४३, संज्वालस्त्रीनपुंसकद्वयहीननोकषायनिजयोगा आहारकद्वये [3]१२, स्त्रीषंढवेदयोराहारकद्वयहीनाः [4]५५, पुंवेदे सर्वे [5]५७, निजहीनान्यकषायद्वादशकोना क्रोधादिषु ४५, मत्यज्ञानश्रुताज्ञानयोराहारकद्वयहीनाः ५५, वैक्रियि[6]कौदारिकमिश्रकार्मणाहारकद्वयोना विभंगे ५२, ज्ञानत्रये मिथ्यात्वपंचकानंतानुबंधिहीनाः ४८, नवाद्ययोगसंज्वालस्त्रीषंढहीननोकषाया मनःपर्यये २०, आद्यंतमनोवचनौदारिकद्वयकार्मणाः केवलज्ञाने ७, संज्वालनोकषायवैक्रियिकद्वयौदारिकमिश्रकार्मणहीनैकादश योगाः सामायिकछेदोपस्थापनयोः २४, आहारक-

१ अनुभयवचनयोगः। २ योगेषु। ३ आहारकयोगिनाम् न स्त्रीनपुंसकवेदोदयः तदुक्तं छट्ठगुणं वा हारे ण थीणातियसंढथीवेदं ॥३१६॥ गो.क.। ४-५ स्त्रीवेदादिमार्गणासु स्वान्यवेदद्वयोदयाभावात् ५५ स्थाने ५३, ५७ स्थाने च ५५ भवितव्यम् अथवा द्रव्यवेदापेक्षया ज्ञातव्येयम् रचना किन्तु न वेदमार्गणायाम् द्रव्यवेदस्यापेक्षाऽस्माभिः कुत्राचिद्दृष्टेतिसर्वैर्विचारणीयम्। ६ वैक्रियकामिश्र।

द्वयहीनास्ते परीहारे २२, नवाद्ययोगान्त्यलोभाः सूक्ष्मे १०, अंत्यलोभोनौदारिकमिश्रकार्मणयुक्ता यथाख्याते ११, नवनोकषायनवाद्ययोगाष्टांत्यकषायत्रसासंयमोनाखिलासंयमाः संयमासंयमे ३७, असंयमे आहारकद्वयहीनाः सर्वे ५५, चक्षुर्दर्शनाचक्षुर्दर्शनयोः सर्वे ५७, ज्ञानत्रयभाविनोऽवधिदर्शने ४८, केवलज्ञानभाविनः केवलदर्शने ७, आद्यलेश्यात्रये आहारकद्वयहीनाः ५५, अंत्यलेश्यात्रये सर्वे ५७, भव्ये सर्वे ५७, अभव्ये आहारकद्वयहीनाः ५५, मिथ्यात्वपंचकानंतानुबंधिचतुष्टयाहारकद्वयहीना औपशमिके ४६, आहारकद्वयाधिका वेदकक्षायिकयोः ४८, मिथ्यात्वपंचकाहारकद्वयहीनाः सासने ५०, मिथ्यात्वपंचकाहारकद्वयानंतानुबंधिवैक्रियिकौदारिकमिश्रकार्मणहीनाः मिश्रे ४३, आहारकद्वयहीनाः मिथ्यात्वे ५५, संज्ञिनि सर्वे ५७, असंज्ञिनि औदारिकद्वयासत्यमृषाभाषेतरयोगहीनाः ४५, आहारके कार्मणहीनाः ५६, अनाहारके कार्मणहीनसकलयोगहीनाः ४३ ।

---

उत्तराः प्रत्ययाः प्रोक्ताः मार्गणास्वखिलास्विति ।
इदानीमिति कथ्यन्ते ते गुणेषूत्तरोत्तराः ॥ ३७ ॥
जघन्याः प्रत्ययाः प्रोक्ता द्वयोर्दर्शनवद्द्वयोः ।
एकत्राष्ट त्रये पंच द्वये द्वावेककस्त्रये ॥ ३८ ॥
अष्टादशादितः सप्तदशषोडशकं द्वयोः ।
चतुर्दश त्रये सप्त त्रिद्वयेकैकैककाः क्रमात् ॥ ३९ ॥

---

१ असंज्ञिनः स्त्रीपुंवेदोदयाभावात् कार्मणयोगस्यसद्भावाच्च ४४ प्रत्ययसद्भावो ज्ञायते इति विचारणीयं ।

उत्कृष्टाः प्रत्यया जीवमेकं प्रत्युत्तरोत्तराः ।
गुणस्थानेषु विज्ञेयाः नानैकसमयं प्रति ॥ ४० ॥
तदित्थम्——

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ज. १० | १० | ९ | ९ | ८ | ५ | ५ | ५ | २ | २ | १ | १ | १ | ० |
| उ. १८ | १७ | १६ | १६ | १४ | ७ | ७ | ७ | ३ | २ | १ | १ | १ | ० |

कालमावलिकामात्रं पाकोऽनंतानुबंधिनाम् ।
जंतोरस्ति न सम्यक्त्वं हित्वा मिथ्यात्वयायिनः[1] ॥ ४१ ॥
सम्यक्त्वतो न मिथ्यात्वं प्रयातोऽन्तर्मुहूर्त्तकम् ।
मिथ्यात्वतो न सम्यक्त्वं शरीरी याति पंचताम्[2] ॥ ४२ ॥

जघन्याः प्रत्ययाः ज्ञेयाः गुणस्थानेषु कोविदैः ।
प्रकृष्टमध्यमैः सार्द्धं क्रमेणेति यथागमम् ॥ ४३ ॥
एकद्वित्रिचतुःपंच षट् संयोगेन कायिकाः ।
गुणकारा भवेयुर्ये ते षट्पंचदशादयः ॥ ४४ ॥
[3]अनुलोमविलोमाभ्यामेकैकोत्तरवृद्धितः ।
एकद्वित्र्यादिसंयोगे विनिक्षिप्य पटीयसा ॥ ४५ ॥
पूर्वकेन परं राशिं गुणयित्वा विलोमतः ।
क्रमादेकादिकैरंकैर्भाजिते लभ्यते फलम्[4] ॥ ४६ ॥
तदित्थं——६ | ५ | ४ | ३ | २ | १
१ | २ | ३ | ४ | ५ | ६

[6]लब्धाः गुणकाराः——६ । १५ । २० । १५ । ६ । १ ।

१ मिथ्यात्वे गमनशीलस्य । २ मृत्युम् । ३ सन्मुखपराङ्मुखाभ्यां । ४ द्विकलं । ५ उपरिस्थांकेषु विलोमाः, अधःस्थांकेष्वनुलोमाः । ६ यत्र षट्कं भवति राशौ तत्रैककं गृह्यते, यत्र पंचदशकाक्षरं तत्र द्विकं गृह्यते, यत्र विंशतिर्भवति तत्र राशौ त्रिकं भवति, यत्र पंचदशकं तत्र चतुष्कं, पत्र

( शेषमग्रे पृष्ठे

एकत्रिपंचषट्षट्षट्चतुस्त्र्येकांकभूषितैः ।
आनेया नवभिः कूटैर्भंगा मिथ्यादृशो बुधैः ॥

कू १ । कू ३ । कूट ५ । कूट ६ । कूट ६ । कूट ६ । कूट ४ । कूट ३ । कूट १ ।

काय १, अनंतानुबंधि ०, भय ०, योग १० ।
एते दश जघन्यप्रत्ययाः ।

मिथ्यात्वमिन्द्रियं कायः कषायैकतमत्रयम् ।
एको वेदो द्वियुग्मैकं दश योगैककः परः ॥ ४७ ॥

१ । १ । १ । ३ । १ । २ । ० । १ । पिंडिताः १० ।

अत्र पंचानां मिथ्यात्वानामेकतमस्योदयेऽस्तीत्येको मिथ्यात्वप्रत्ययः, षण्णामिन्द्रियाणामेकतमेन षण्णां कायानामेकतमस्य विराधने द्वावसंयमप्रत्ययौ, प्रथमचतुष्कहीनानां चतुर्णां कषायाणामेकतमत्रिकोदये त्रयः कषायप्रत्ययाः, त्रयाणां वेदानामेकतमोदये एको वेदप्रत्ययः, हास्यरतियुग्मारतिशोकयुग्मयोरेकतरोदये द्वौ युग्मप्रत्ययौ, आहारकद्वयमिश्रत्रयहीनानां दशानां योगानामेकतमोदये एको योगप्रत्ययः । एवमेते मिथ्यादृष्टेरेकत्र समये जघन्यप्रत्ययाः दश । १० ।

सत्रयोदशयोगस्य सम्यग्दर्शनधारिणः ।
मिथ्यात्वमुपयातस्य शान्तानंतानुबंधिनः ॥ ४८ ॥

---

षट्कं तत्र पंचकं, यत्रैककं तत्र षट्कं गृह्यते । तद्यथा ६÷१=६ । ६×५=३०, १×२=२, ३०÷२=१५ । ६×५×४=१२०, १×२×३=६, १२०÷६=२० । ६×५×४×३=३६०, १×२×३×४=२४, ३६०÷२४=१५ । ६×५×४×३×२=७२०, १×२×३×४×५=१२०, ७२०÷१२०=६ । ६×५×४×३×२×१=७२०, १×२×३×४×५×६=७२०, ७२०÷७२०=१ ।

पाकोनावलिकां यस्मादस्त्यनंतानुबंधिनाम् ।
ततोऽनंतानुबंध्यूनकषायप्रत्ययत्रयम् ॥ ४९ ॥
असौ न म्रियते यस्मात्कालमंतर्मुहूर्त्तकम् ।
मिश्रत्रयं विना तस्माद्यौगिकाः प्रत्ययाः दश ॥ ५० ॥

मिथ्यात्वपंचकेंद्रियषट्ककायषट्ककषायचतुष्कवेदत्रययुग्मद्वययोगदशकैकतमभंगाः ५×६×६×४×३×२×०×१०=४३-२०० परस्पराभ्यस्ताः ।

सामान्यस्य विशेषस्य संख्यायाः कूटमुच्यते ।
चतुर्थं गुणकारस्य भंगराशेश्च पंचमम् ॥ ५१ ॥
गुणस्थानेषु सर्वेषु कूटस्थानेषु पंचसु ।
आनेयाः सकलाः भंगाः विज्ञाय प्रत्ययस्थिताः ॥ ५२ ॥

गुणकारकूटं सामान्यकूटाकारेण विरचितं विशेषकूटं संख्यागुणकारकूटं भंगराशिकूटम् । ४३२०० ।

| सामान्यकूटम् | विशेषकूटमिदं | गुणकारकूटं | संख्याकूटं | |
|---|---|---|---|---|
| १५ | १० | १० | १ | या. |
| २ | ० | ० | ० | भ. |
| २-२ | २-२ | २ | २ | हा. |
| १-१-१ | १ १ १ | ३ | १ | वे. |
| ४-४-४-४ | ३-३-३-३ | ४ | ३ | क्रो. |
| १-१-१-१-१-१ | १ १ १ १ १ १ | ६ | १ | का. |
| १-१-१-१-१-१ | १ १ १ १ १ १ | ६ | १ | इं. |
| १-१-१-१-१ | १ १ १ १ १ | ५ | १ | मि. |

दशभिः प्रत्ययैर्मिथ्यादृष्टिर्बध्नाति षोडश ।
अर्पिताः प्रकृतीरेतैर्जघन्येनेति दर्शितम् ॥ ५३ ॥

इत्थमेकादशादीनां विधातव्या प्ररूपणा ।
प्रत्ययानां पटीयोभिरवबुध्य यथागमम् ॥ ९४ ॥

| एकादशः—का | अन. | भ. | यो. |
|---|---|---|---|
| २ | ० | ० | १० |
| १ | १ | ० | १३ |
| १ | ० | १ | १० |

| सं. | | गु | सं. | गु | सं. | गु. |
|---|---|---|---|---|---|---|
| यो. | १ | १० | १ | १३ | १ | १० |
| | | भ ० | | भ. | १ | २ |
| हा. | २ | २ | २ | २ | २ | २ |
| वे. | १ | ३ | १ | ३ | १ | ३ |
| क. | ३ | ४ | ४ | ४ | ३ | ४ |
| इं | १ | ६ | १ | ६ | १ | ६ |
| मि. | १ | ५ | १ | ५ | १ | ५ |
| काय | २ | १५ | १ | ६ | १ | ६ |

१०८०००
५६१६०
८६४००
सर्वे मिलिताः
२५०५६०

११

## द्वादशः

| का. | अन. | भ. | यो. |
|---|---|---|---|
| ३ | ० | ० | १० |
| २ | १ | ० | १३ |
| २ | ० | १ | १० |
| १ | १ | १ | १३ |
| १ | ० | २ | १० |

इयं चूलिका

संख्या।

| | | | | |
|---|---|---|---|---|
| यो १ | यो १ | यो १ | यो १ | यो १ |
| भ ० | भ ० | भ १ | भ १ | भ २ |
| हा २ | हा २ | हा २ | हा २ | हा २ |
| वे १ | वेद् १ | वे १ | वे १ | वे १ |
| क्रो ३ | क्रो ४ | क्रो ३ | क्रो ४ | क्रो २३ |
| इं १ | इं १ | इं १ | इं १ | इं १ |
| मि १ | मि १ | मि १ | मि १ | मि १ |
| का ३ | का २ | का २ | का १ | का १ |

( १ ) १०×२×३×४×६×५×१५=१०८००० एवमन्यत्रापि ।

| सर्वे मिलिताः |
| --- |
| १४४००० |
| १४०४०० |
| २१६००० |
| ११२३२० |
| ४३२०० |
| ६५५९२० |

|१२|

गुणाकारः

| | | | | |
| --- | --- | --- | --- | --- |
| १० | १३ | १० | १३ | १० |
| भ० | भ० | ए२ | ए२ | × |
| २ | २ | २ | २ | २ |
| ३ | ३ | ३ | ३ | ३ |
| ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ |
| ५ | ५ | ५ | ५ | ५ |
| २० | १५ | १५ | ६ | ६ |

## त्रयोदशः ।

| का. | अन. | भ. | यो. | | |
| --- | --- | --- | --- | --- | --- |
| ४ | ० | ० | १० | | |
| ३ | १ | ० | १३ | | |
| ३ | ० | १ | १० | | |
| २ | १ | १ | १३ | | |
| २ | ० | २ | १० | | |
| १ | १ | २ | १३ | | |
| यो १ | यो १ | यो १ | यो १ | १ | १ |
| भ ० | भ ० | भ १ | भ १ | २ | २ |
| हा २ | हा २ | हा २ | हा २ | २ | २ |
| वे १ | वे १ | वे १ | वे १ | १ | १ |
| क्रो ३ | क्रो ४ | क्रो ३ | क्रो ४ | ३ | ४ |
| इं १ | इं १ | इं १ | इं १ | १ | १ |
| मि. १ | मि १ | मि १ | मि १ | १ | १ |
| का ४ | का ३ | का ३ | का २ | २ | १ |

| | | | | | |
| --- | --- | --- | --- | --- | --- |
| १० | १३ | १० | १३ | १० | १३ |
| भ० | भ० | ए२ | ए२ | द्वो× | द्वो× |
| २ | २ | २ | २ | २ | २ |
| ३ | ३ | ३ | ३ | ३ | ३ |
| ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ |
| ५ | ५ | ५ | ५ | ५ | ५ |
| १५ | २० | २० | १५ | १५ | ६ |

| सर्वे मिलिताः |
| --- |
| १०८००० |
| १८७२०० |
| २८८००० |
| २८०८०० |
| १०८००० |
| ५६१६० |
| १०२८१६० |

|१३|

## चतुर्दशः

| का | अ | भ | यो | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ५ | ० | ० | १० | यो १ | यो १ | यो. १ | यो. १ | यो १ | यो १ |
| ४ | १ | ० | १३ | भ ० | भ ० | भ. १ | भ. १ | भ २ | भ २ |
| ४ | ० | १ | १० | हा २ | हा २ | हा. २ | हा. २ | हा २ | हा २ |
| ३ | १ | १ | १३ | वे १ | वे १ | वे. १ | वे. १ | वे १ | वे १ |
| ३ | ० | २ | १० | क्रो ३ | क्रो ४ | क्रो. ३ | क्रो. ४ | क्रो ३ | क्रो ४ |
| २ | १ | २ | १३ | इं १ | इं १ | इं. १ | इं. १ | इं १ | इं १ |
| | | | | मि १ | मि १ | मि. १ | मि. १ | मि १ | मि १ |
| | | | | का ५ | का ४ | का. ४ | का. ३ | का ३ | का २ |

| | | | | | |
|---|---|---|---|---|---|
| १० | १३ | १० | १३ | १० | १३ |
| भ० | भ० | ए २ | ए २ | दो× | दो× |
| २ | २ | २ | २ | २ | २ |
| ३ | ३ | ३ | ३ | ३ | ३ |
| ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ |
| ५ | ५ | ५ | ५ | ५ | ५ |
| ६ | १५ | १५ | २० | २० | १५ |

सर्वे मिलिताः-

| |
|---|
| ४३२०० |
| १४०४०० |
| २१६००० |
| ३७४४०० |
| १४४००० |
| १४०४०० |
| १०५८४०० |

| १४ |

## पञ्चदशः ।

| का. | अन | भ. | यो. |
|---|---|---|---|
| ६ | ० | ० | १० |
| ५ | १ | ० | १३ |
| ५ | ० | १ | १० |
| ४ | १ | १ | १३ |
| ४ | ० | २ | १० |
| ३ | १ | २ | १३ |

| | | | | | |
|---|---|---|---|---|---|
| १० | १३ | १० | १३ | १० | १३ |
| भ. | भ. | ए २ | ए २ | दो× | दो× |
| २ | २ | २ | २ | २ | २ |
| ३ | ३ | ३ | ३ | ३ | ३ |
| ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ |
| ५ | ५ | ५ | ५ | ५ | ५ |
| १ | ६ | ६ | १५ | १५ | २० |

| |
|---|
| ७२०० |
| ५६१६० |
| ८६४०० |
| २८०८०० |
| १०८००० |
| १८७२०० |
| सर्वे मिलिताः |
| ७२५७६० |

| १५ |

## षोडशः ।

| क्रा. | अन. | भ. | यो. |
|---|---|---|---|
| ६ | ० | १ | १० |
| ५ | १ | १ | १३ |
| ५ | ० | २ | १० |
| ४ | १ | २ | १३ |

| | | | |
|---|---|---|---|
| १० | १३ | १० | १३ |
| ए २ | ए २ | दो× | दो× |
| २ | २ | २ | २ |
| ३ | ३ | ३ | ३ |
| ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ |
| ५ | ५ | ५ | ५ |
| १ | ६ | ६ | १५ |

सर्वे मिलिताः—

| |
|---|
| १४४०० |
| ११२३२० |
| ४३२०० |
| १४०४०० |
| ३१०३२० |

|१६|

## सप्तदशः ।

| का | अ | भ | यो |
|---|---|---|---|
| ६ | १ | १ | १३ |
| ६ | ० | २ | १० |
| ५ | १ | २ | १३ |

| | | |
|---|---|---|
| १३ | १० | १३ |
| ए २ | दो× | दो× |
| २ | २ | २ |
| ३ | ३ | ३ |
| ४ | ४ | ४ |
| ६ | ६ | ६ |
| ५ | ५ | ५ |
| १ | १ | ६ |

सर्वे मिलिताः—

| |
|---|
| १८७२० |
| ७२०० |
| ५६१६० |
| ८२०८० |

|१७|

का ६ । अ १ । भ २ । यो १३ ।

मिथ्यात्वमिन्द्रियं कायाः षट् कषायचतुष्टयम् ।
वेदो द्वियुगलैकं भीयुग्मं योगो दशाष्ट च ॥

१।१।६।४।१।२।२।१। मिलिताः १८ ।

पंचानां मिथ्यात्वानामेकतमः, षण्णामिन्द्रियाणामेकतमेन षट्कायविराधने सप्तासंयमप्रत्ययाः, चतुर्णां कषायाणामेकतम-चतुष्कोदये चत्वारः, एकतरो वेदः, एकतरयुगलं, भयजुगुप्साद्वयं, आहारकद्वयं विना त्रयोदशानां योगानामेकतमः । एवमेतेऽष्टादशोत्कृष्टप्रत्ययाः १८ ।

मिथ्यात्वपंचकेन्द्रियषट्ककायकषायचतुष्कवेदत्रयहास्यादियुग्मद्वयभयजुगुप्सैकत्रयोदशयोगा भंगाः । ५ । ६ । १ । ४ । ३ । २ । १ । १३ । परस्पराभ्यस्ताः ९३६० । मिथ्यादृष्टेः सर्वे भंगा मिलिताः ४१६३७६० ।

सासादनो यतो जातु श्वभ्रभूमिं न गच्छति ।
मिश्रे वैक्रियिके योगे स्त्रीपुंवेदद्वयं ततः ॥
योगैर्द्वादशभिस्तस्मान्मिश्रवैक्रियिकेण च ।
त्रिभिर्द्वाभ्यां च वेदाभ्यां तस्य भंगप्रकल्पना ।
संस्थाप्य सासनं द्वेधा योगवेदैर्यथोदितैः ।
गुणयित्वाऽखिलाः भंगास्तस्यानेयाः यथागमम् ॥

का. १ । अन. १ । भ. ० । यो १२ । ( १ ) । ० । १ । १ । ४ । १ । २ । ० । १ । मिलिताः १० । एतेषामेते । ० । ६ । ६ । ४ । २ । ० । १२ । अन्योन्यगुणा भंगाः १०३६८ । मिश्रवैक्रियिकयोगे यतः सासनो नरकं न गच्छति ततो देवेषु स्त्रीपुंवेदयोरेते । ० । ६ । ६ । ४ । २ । २ । ० । १ । अन्योन्यगुणाः ५७६ । एते १०३६८ एते च ५७६ मिलिताः जघन्याः १०९४४ ।

एकादशः ।

| का. | अन. | भ. | यो | |
|---|---|---|---|---|
| २ | १ | ० | १२ | १ |
| १ | १ | १ | १२ | ५ |

| | वै. मि. | | वै. मि. |
|---|---|---|---|
| १२ | १ | १२ | १ |
| भ ० | भ० | ए २ | ए २ |
| २ | २ | २ | २ |
| ३ | २ | ३ | २ |
| ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ |
| २५९२० | १४४० | २०७३६ | ११५२ |

सर्वे मिलिताः—

| |
|---|
| २७३६०ए |
| २१८८८ए |
| ४९२४८ |
| ११ |

## द्वादशः ।

| का. | अन. | भ. | यो. | |
|---|---|---|---|---|
| ३ | १ | ० | १२ | १ |
| २ | १ | १ | १२ | १ |
| १ | १ | २ | १२ | १ |

| | वै. मि. | | वै. मि. | | वै. मि. |
|---|---|---|---|---|---|
| १२ | १ | १२ | १ | १२ | १ |
| भ० | भ० | ए २ | ए २ | दो× | दो× |
| २ | २ | २ | २ | २ | २ |
| ३ | २ | ३ | २ | ३ | २ |
| ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ |
| २० | २० | १५ | १५ | ६ | ६ |
| ३४५६० | | ५१८४० | | १०३६८ | |
| ११२० | | २८८० | | ५७६ | |

मिलिताः—

| |
|---|
| ३६४८० |
| ५४७२० |
| १०९४४ |
| १०२१४४ |
| १२ |

## त्रयोदशः ।

| का. | अन. | भ. | यो. | |
|---|---|---|---|---|
| ४ | १ | ० | १२ | १ |
| ३ | १ | १ | १२ | १ |
| [illegible] | १ | २ | १२ | १ |

| | वै. मि. | | वै. मि. | | वै. मि. |
|---|---|---|---|---|---|
| १२ | १ | १२ | १ | १२ | १ |
| भ० | भ० | ए २ | ए २ | दो× | दो× |
| २ | २ | २ | २ | २ | २ |
| ३ | २ | ३ | २ | ३ | २ |
| ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ |
| १५ | १५ | २० | २० | १५ | १५ |
| २५९२० | | ६९१२० | | २५९२० | |
| १४४० | | ३८४० | | १४४० | |

सर्वे मिलिताः—

| |
|---|
| ए. २७३६० |
| ए. ७२९६० |
| ए. २७३६० |
| १२७६८० |

## चतुर्दशः ।

| का. | अन | भ. | यो. | |
|---|---|---|---|---|
| ५ | १ | ० | १२ | १ |
| ४ | १ | १ | १२ | १ |
| ३ | १ | २ | १२ | १ |

| | वै.मि. | | वै.मि. | | वै.मि. |
|---|---|---|---|---|---|
| १२ | १ | १२ | १ | १२ | १ |
| भ० | भ० | ए२ | ए२ | दो× | दो× |
| २ | २ | २ | २ | २ | २ |
| ३ | २ | ३ | २ | ३ | २ |
| ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ |
| ६ | ६ | १५ | १५ | २० | २० |
| १०३६८ | | ५१८४० | | २५९२० | |
| ५७६ | | २८८० | | १९२० | |

मिलिताः—

| |
|---|
| १०९४४ |
| ५४७२० |
| ३६४८० |
| १०२१४४ |
| १४ |

## पञ्चदशः ।

| का. | अन. | भ. | यो | |
|---|---|---|---|---|
| ६ | १ | ० | १२ | १ |
| ५ | १ | १ | १२ | १ |
| ४ | १ | २ | १२ | १ |

| | वै.मि. | | वै.मि. | | वै.मि. |
|---|---|---|---|---|---|
| १२ | १ | १२ | १ | १२ | १ |
| भ० | भ० | ए२ | ए२ | दो× | दो× |
| २ | २ | २ | २ | २ | २ |
| ३ | २ | ३ | २ | ३ | २ |
| ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ |
| १ | १ | ६ | ६ | १५ | १५ |
| १७२८ | | २०७३६ | | २५९२० | |
| ९६ | | ११५२ | | १४४० | |

मिलिताः-

| |
|---|
| १८२४ |
| २१८८ |
| २७३६० |
| ५१०७२ |
| १५ |

## षोडशः ।

| का. | अन. | भ. | यो. | |
|---|---|---|---|---|
| ६ | १ | १ | १२ | १ |
| ५ | १ | २ | १२ | १ |

| | वै.मि. | | वै.मि. |
|---|---|---|---|
| १२ | १ | १२ | १ |
| ए २ | ए २ | दो× | दो× |
| २ | २ | २ | २ |
| ३ | २ | ३ | २ |
| ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ |
| १ | १ | ६ | ६ |
| ३४५६ | | १०३६८ | |
| १९२ | | ५७६ | |

मिलिताः—

| |
|---|
| ३६४८ |
| १०९४४ |
| १४५९२ |

## सप्तदशः ।

| का. | अन. | भ. | यो. | |
|---|---|---|---|---|
| ६ | १ | २ | १२ | १ |

| | वै.मि. |
|---|---|
| १२ | १ |
| दो× | दो× |
| २ | २ |
| ३ | २ |
| ४ | ४ |
| ६ | ६ |
| १ | १ |

तयोः

| |
|---|
| १७२५ |
| ९६ |

मिलिताः

| |
|---|
| १८२४ |
| १७ |

**अमी सर्वे—४५९६४८ भंगाः ।**

**इति सासादनभंगाः ।**

**सम्यङ्मिथ्यादृष्टेः प्रत्ययभंगाः निरूप्यन्ते—**

## नवमः ।

| का. | भ. | यो. |
|---|---|---|
| १ | ० | १० |

| |
|---|
| १० |
| ० |
| २ |
| ३ |
| ४ |
| ६ |
| ६ |

मिलिताः—

| |
|---|
| ८६४० |
| ९ |

## दशमः ।

| का. | भ. | यो. |
|---|---|---|
| २ | ० | १० |
| १ | १ | १० |

| | |
|---|---|
| १० | १० |
| म. ० | ए. २ |
| २ | २ |
| ३ | ३ |
| ४ | ४ |
| ६ | ६ |
| १५ | ६ |

मिलिताः—

२१६००
१७२८०
३८८८०

|१०|

## एकादशः ।

| का. | भ. | यो. |
|---|---|---|
| ३ | ० | १० |
| २ | १ | १० |
| १ | २ | १० |

| | | |
|---|---|---|
| १० | १० | १० |
| भ० | ए २ | द्वा× |
| २ | २ | २ |
| ३ | ३ | ३ |
| ४ | ४ | ४ |
| ६ | ६ | ६ |
| २० | १५ | ६ |

मिलिताः—

२८८००
४३२००
८६४०
८०६४०

|११|

## द्वादशः ।

| का. | भ. | यो. |
|---|---|---|
| ४ | ० | १० |
| ३ | १ | १० |
| २ | २ | १० |

| | | |
|---|---|---|
| १० | १० | १० |
| भ० | ए २ | द्वा× |
| २ | २ | २ |
| ३ | ३ | ३ |
| ४ | ४ | ४ |
| ६ | ६ | ६ |
| १५ | २० | १५ |

मिलिताः—

२१६००
५७६००
२१६००
१००८००

|१२|

## त्रयोदशः ।

| का. | भ. | यो. |
|---|---|---|
| ५ | ० | १० |
| ४ | १ | १० |
| ३ | २ | १० |

| १० | १० | १० |
|---|---|---|
| भ० | ए२ | द्वो× |
| २ | २ | २ |
| ३ | ३ | ३ |
| ४ | ४ | ४ |
| ६ | ६ | ६ |
| ६ | १५ | २० |

मिलिताः—

| |
|---|
| ८६४० |
| ४३२०० |
| २८८०० |
| ८०६४० |

|१३|

## चतुर्दशः ।

| का | भ | यो |
|---|---|---|
| ६ | ० | १० |
| ५ | १ | १० |
| ४ | २ | १० |

| १० | १० | १० |
|---|---|---|
| भ० | ए२ | द्वो× |
| २ | २ | २ |
| ३ | ३ | ३ |
| ४ | ४ | ४ |
| ६ | ६ | ६ |
| ६ | ६ | ६ |
| १ | ६ | १५ |

मिलिताः—

| |
|---|
| १४४० |
| १७२८० |
| २१६०० |
| ४०३२० |

|१४|

## पंचदशः ।

| का. | भ. | यो. |
|---|---|---|
| ६ | १ | १० |
| ५ | २ | १३ |

| १० | १० |
|---|---|
| ए२ | द्वो× |
| २ | २ |
| ३ | ३ |
| ४ | ४ |
| ६ | ६ |
| १ | ६ |

मिलिताः—

| |
|---|
| २८८० |
| ८६४० |
| ११५२० |

|१५|

षोडशः ।

| का. | भ. | यो. |
| --- | --- | --- |
| ६ | २ | १० |

१०
द्वो×
२
३
४
६
―
१

सर्वे मिलिताः—

१४४०
―
१६

सर्वे मिलिताः=

३६३८८०

इति सम्यङ्मिथ्यादृष्टेर्भंगाः प्ररूपिताः ।

अथ असंयतस्य भंगाः निरूप्यंते—

योगे वैक्रियिके मिश्रे कार्मणे च सुधाशिषु ।
पुंवेदः षण्ढवेदश्च श्वभ्रे बद्धायुषः पुनः ॥ ५९ ॥
तिर्यक्ष्वौदारिके मिश्रे पूर्वबद्धायुषो मतः ।
मनुष्येषु च पुंवेदः सम्यक्त्वालंकृतात्मनः ॥ ६० ॥
त्रिभिर्द्वाभ्यां तथैकेन वेदेनास्य प्रताडना ।
भंगानां दशभिर्योगैर्द्वाभ्या[1]मेकेन च क्रमात् ॥ ६१ ॥

अस्यार्थः—चिरंतनचतुश्चत्वारिंशच्छतादिलक्षणं राशिं त्रिधा व्यवस्थाप्यैकंस्त्रिभिर्वेदैः, अन्यं द्वाभ्यां पुंनपुंसकवेदाभ्यां, परमेकेन नपुंसकवेदेन गुणितं, [2]युगलेन गुणयित्वा, योगैरेकं दशभिः, अन्यं द्वाभ्यां वैक्रियिकामिश्रकार्मणाभ्यां, परमेकेनौदारिकमिश्रेण गुणयेत् । तत एकीकरणे फलं भवति ।

---

१ क ख पुस्तकयोः "द्वाभ्यां योगेनैकेन च क्रमात्" इतिपाठः किन्त्वनेन छन्दोभङ्गः नार्थविशेषश्च । २ हास्यादियुगलेन ।

## नवमः ।

| का. | भ. | यो. | यो. | यो. |
|---|---|---|---|---|
| १ | ० | १० | २ | १ |

| | | |
|---|---|---|
| १० | २ | १ |
| भ० | भ० | भ० |
| २ | २ | २ |
| ३ | २ | १ |
| ४ | ४ | ४ |
| ६ | ६ | ६ |
| ६ | ६ | ६ |

मिलिताः—

| |
|---|
| ८६४० |
| ११५२ |
| २८८ |
| १००८० |

| ९ |

## दशमः ।

| का. | भ. | यो. | | |
|---|---|---|---|---|
| २ | ० | १० | २ | १ |
| १ | १ | १० | २ | १ |

| | | | | | |
|---|---|---|---|---|---|
| १० | २ | १ | १० | २ | १ |
| भ० | भ० | भ० | ए२ | ए२ | ए२ |
| २ | २ | २ | २ | २ | २ |
| ३ | २ | १ | ३ | २ | १ |
| ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ |
| १५ | १५ | १५ | ६ | ६ | ६ |

मिलिताः—

| |
|---|
| २५२०० |
| २०१६० |
| ४५३६० |

## एकादशः ।

| का. | भ. | यो. | यो. | यो. |
|---|---|---|---|---|
| ३ | ० | १० | २ | १ |
| २ | १ | १० | २ | १ |
| १ | २ | १० | २ | १ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १० | २ | १ | १० | २ | १ | १० | २ | १ |
| भ० | भ० | भ० | ए२ | ए२ | ए२ | द्वोX | द्वोX | द्वोX |
| २ | २ | २ | २ | २ | २ | २ | २ | २ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |
| ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ |
| २० | २० | २० | १५ | १५ | १५ | ६ | ६ | ६ |
| २८८०० | ३८४० | ९६० | ४३२०० | ५७६० | १४४० | ८६४० | ११५२ | २८८ |

मिलिताः—

| | |
|---|---|
| ए. | ३३६०० |
| ए. | ५०४०० |
| ए. | १००८० |
| | ९४०५० |

११

## द्वादशः ।

| | | | | |
|---|---|---|---|---|
| का. | भ. | यो. | यो. | यो |
| ४ | ० | १० | २ | १ |
| ३ | १ | १० | २ | १ |
| २ | २ | १० | २ | १ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १० | २ | १ | १० | २ | १ | १० | २ | १ |
| भ ० | भ० | भ० | ए २ | ए २ | ए २ | द्वो × | द्वो २ | द्वो× |
| २ | २ | २ | २ | २ | २ | २ | २ | २ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |
| ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ |
| १५ | १५ | १५ | २० | २० | २० | १५ | १५ | १५ |
| २१६०० | २८८० | ७२० | ५७६० | ७६८० | १९२० | २१६०० | २८८० | ७२० |

मिलिताः—

| | |
|---|---|
| ए. | २५२०० |
| ए. | ६७२०० |
| ए. | २५२०० |
| | ११७६०० |

१२

## त्रयोदशः ।

| | | | | |
|---|---|---|---|---|
| का. | भ. | यो | यो. | यो. |
| ५ | ० | १० | २ | १ |
| ४ | १ | १० | २ | १ |
| ३ | २ | १० | २ | १ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १० | २ | १ | १० | २ | १ | १० | २ | १ |
| भ ० | भ ० | भ० | ए २ | ए २ | ए २ | दो × | दो × | दो × |
| २ | २ | २ | २ | २ | २ | २ | २ | २ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |
| ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ |
| ६ | ६ | ६ | १५ | १५ | १५ | २० | २० | २० |
| ८६४० | ११५२ | २८८ | ४३२०० | ५७६० | १४४० | २८८०० | ३८४० | ९६० |

मिलिताः—

| |
|---|
| १००८० |
| ५०४०० |
| ३३६०० |
| ९४०८० |

|१३|

## चतुर्दशः ।

| का. | भ. | यो. | यो. | यो. |
|---|---|---|---|---|
| ६ | ० | १० | २ | १ |
| ५ | १ | १० | २ | १ |
| ४ | २ | १० | २ | १ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १० | २ | १ | १० | २ | १ | १० | २ | १ |
| म० | भ० | भ० | ए २ | ए २ | ए २ | दो × | दो × | दो × |
| २ | २ | २ | २ | २ | २ | २ | २ | २ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |
| ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ |
| १ | १ | १ | ६ | ६ | ६ | १५ | १५ | १५ |
| १४४० | १९२ | ४८ | १७२८० | २३०४ | ५७६ | २१६०० | २८८० | ७२० |

मिलिताः—

| |
|---|
| १६८० |
| २०१६० |
| २५२०० |
| ४७०४० |
| १४ |

## पंचदशः ।

| का. | भ. | यो. | यो. | यो. |
|---|---|---|---|---|
| ६ | १ | १० | २ | १ |
| ५ | २ | १० | २ | १ |

| | | | | | |
|---|---|---|---|---|---|
| १० | २ | १ | १० | २ | १ |
| ए २ | ए २ | ए २ | दो × | दो × | दो × |
| २ | २ | २ | २ | २ | २ |
| ३ | २ | १ | ३ | २ | १ |
| ४ | ४ | ४ | ४ | ४ | ४ |
| ६ | ६ | ६ | ६ | ६ | ६ |
| १ | १ | १ | ६ | ६ | ६ |
| २८८० | ३८४ | ९६ | ८६४० | ११५२ | २८८ |

मिलिताः—

| |
|---|
| ३३६० |
| १००८० |
| १३४४० |
| १५ |

## षोडशः ।

| का. | भ. | यो. | यो. | यो. |
|---|---|---|---|---|
| ६ | २ | १० | २ | १ |

| | | |
|---|---|---|
| १० | २ | १ |
| दो × | दो × | दो × |
| २ | २ | २ |
| ३ | २ | १ |
| ४ | ४ | ४ |
| ६ | ६ | ६ |
| १ | १ | १ |
| १४४० | १९२ | ४८ |

मिलिताः—

| |
|---|
| १६८० |
| १६ |

**एवं सर्वे मिलिताः ४२३३६० भंगाः भवन्ति ।**

**असंयतस्य भंगाः समाप्ताः ।**

देशसंयतस्याभिधीयन्ते—

ज्ञेयाः पंच दश प्राज्ञैः दश पंचैकक: क्रमात् ।
गुणकारविधानेन संयतासंयतस्थिते: ॥ ६२ ॥

५।१०।१०।५।१।

अष्टमः ।

| का. | भ. | यो. |
|---|---|---|
| १ | ० | ९ |

तस्य

| ६४८० |
|---|
| १ |

नवमः ।

| का. | भ. | यो. |
|---|---|---|
| २ | ० | ९ |
| १ | १ | ९ |

| | |
|---|---|
| १ | यो. |
| २ | हा. |
| १ | वे. |
| २ | क. |
| १ | इं. |
| २ | का. |

| | |
|---|---|
| ९ | ९ |
| भ० | ए२ |
| २ | २ |
| ३ | ३ |
| ४ | ४ |
| ६ | ६ |
| १० | ५ |

मिलिताः—

| |
|---|
| १२९६० |
| १२९६० |
| २५९२० |
| ९ |

दशमः ।

| का. | भ. | यो. |
|---|---|---|
| ३ | ० | ९ |
| २ | १ | ९ |
| १ | २ | ९ |

| | | |
|---|---|---|
| ९ | ९ | ९ |
| भ. | ए२ | दो× |
| २ | २ | २ |
| ३ | ३ | ३ |
| ४ | ४ | ४ |
| ६ | ६ | ६ |
| १० | १० | ५ |

मिलिताः—

| |
|---|
| १२९६० |
| २५९२० |
| ६४८० |
| ४५३६० |
| १० |

१ त्रसबधाभावात् प्राणिबधस्यासंयुक्तभंगाः ५, द्विसंयोगिभंगाः १०, त्रिसंयोगिभंगाः १०, चतुःसंयोगिभंगाः ५, पंचसंयोगिभंगा १ ।

## एकादशः ।

| का. | भ. | यो. |
|---|---|---|
| ४ | ० | ९ |
| ३ | १ | ९ |
| २ | २ | ९ |

| | | |
|---|---|---|
| ९ | ९ | ९ |
| भ० | ए२ | दोX |
| २ | २ | २ |
| ३ | ३ | ३ |
| ४ | ४ | ४ |
| ६ | ६ | ६ |
| ५ | १० | १० |

मिलिताः—

| |
|---|
| ६४८० |
| २५९२० |
| १२९६० |
| ४५३६० |

|११|

## द्वादशः ।

| का. | भ. | यो. |
|---|---|---|
| ५ | ० | ९ |
| ४ | १ | ९ |
| ३ | २ | ९ |

| | | |
|---|---|---|
| ९ | ९ | ९ |
| भ० | ए२ | दोX |
| २ | २ | २ |
| ३ | ३ | ३ |
| ४ | ४ | ४ |
| ६ | ६ | ६ |
| १ | ५ | १० |

मिलिता—

| |
|---|
| १२९६ |
| १२९६० |
| १२९६० |
| २७२१६ |

|१२|

## त्रयोदशः ।

| का. | भ. | यो. |
|---|---|---|
| ५ | १ | ९ |
| ४ | २ | ९ |

| | |
|---|---|
| ९ | ९ |
| ए२ | दोX |
| २ | २ |
| ३ | ३ |
| ४ | ४ |
| ६ | ६ |
| १ | ५ |

मिलिताः—

| |
|---|
| २५९२ |
| ६४८० |
| ९०७२ |

|१३|

चतुर्दशः ।

| का. | भ. | यो |
|---|---|---|
| ५ | २ | १ |

| |
|---|
| १ |
| द्वो× |
| २ |
| ३ |
| ४ |
| ६ |
| १ |

तस्य

| |
|---|
| १२९६ |
| १४ |

सर्वे देशसंयतस्य भंगाः १६०७०४ ।

प्रमत्तमङ्गानाह——

आहारकद्वयं ज्ञेयं पुंवेदस्योदये ततः ।
प्रमत्तस्य यतो नेदं निंद्यवेदोदये सति ॥ ६३ ॥
कर्त्तव्या नवभिर्द्वाभ्यां योगाभ्यां भंगकल्पना ।
त्रिभिरेकेन वेदेन द्वेधा संस्थाप्य स क्रमात् ॥ ६४ ॥

प्रमत्तस्य सर्वे भंगा ९२८ । तदित्थम्—

| | | | |
|---|---|---|---|
| यो. | १ | ९ | २ |
| | | भ० | ० |
| हा. | २ | २ | २ |
| वे. | १ | ३ | १ |
| क. | १ | ४ | ४ |
| | ५ | २१६+१६ | |
| | | २३२ | |

| | | | |
|---|---|---|---|
| यो. | १ | ९ | २ |
| भ. | १ | २ | २ |
| हा. | २ | २ | २ |
| वे. | १ | ३ | १ |
| क. | १ | ४ | ४ |
| | ६ | ४३२+३२ | |
| | | ४६४ | |

| | | | |
|---|---|---|---|
| यो. | १ | ९ | २ |
| भ. | २ | × | × |
| हा. | २ | २ | २ |
| वे. | १ | ३ | १ |
| क. | १ | ४ | ४ |
| | ७ | २१६+१६ | |
| | | २३२ | |

२३२+४६४+२३२=९२८

अप्रमत्तापूर्वगुणद्वयभंगानाह——

पुंवेदाहारकद्वन्द्वविहीनः प्रक्रमः परः ।
प्रमत्तावस्थितः कृत्यो[1] गुणस्थानद्वये[2] परे ॥ ६५ ॥

तत्राप्रमत्तस्य तावत्सर्वे भंगाः अपूर्वस्य च,—

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | ९ | १ | ९ | १ | ९ | २१६ |
| | म० | १ | २ | २ | द्वो× | ज. ५ |
| २ | २ | २ | २ | २ | २ | ४३२ |
| १ | ३ | १ | ३ | १ | ३ | म. ६ |
| १ | ४ | १ | ४ | १ | ४ | २१६ |
| ५ | ० | ६ | ० | ७ | ० | उ. ७ |
| | ० | | ० | | ० | |
| | ० | | ० | | ० | |
| | | | | | | अप्रमत्तस्य ८६४ |

| | | | | | |
|---|---|---|---|---|---|
| १ | ९ | १ | ९ | १ | ९ |
| २ | म० | १ | ए. २ | २ | द्वो× |
| १ | २ | २ | २ | २ | २ |
| १ | ३ | १ | ३ | १ | ३ |
| ५ | ४ | १ | ४ | १ | ४ |
| | ० | ६ | ० | ७ | ० |
| | ० | | ० | | ० |
| | ० | | ० | | ० |

| |
|---|
| २१६ ज. प्र. |
| ४३२ म. ६ प्र. |
| २१६ उ. ७ प्र. |
| अपूर्वस्य ८६४ |

अनिवृत्तिगुणस्याह—

जघन्यौ प्रत्ययौ ज्ञेयौ द्वाववेदानिवृत्तिके ।
संज्वालेषु चतुर्ष्वेको योगानां नवके परः ॥ ६६ ॥

१ । १ । भंगाः[3] । ४ । ९ अन्योन्याभ्यस्तौ ।

कषायवेदयोगानामेकैकग्रहणे सति ।
अनिवृत्तेः सवेदस्य प्रकृष्टाः प्रत्ययास्त्रयः ॥ ६७ ॥

भंगाः ४ । ३ । ९ अन्योन्याभ्यस्ताः[4] १०८ ।

सूक्ष्मसांपरायस्य भंगानाह—

एकः संज्वलनो लोभो योगानां नवके परम् ।
द्वावेव प्रत्ययौ ज्ञेयौ सूक्ष्मलोभे मनीषिभिः ॥ ६८ ॥

---

१ कार्यः । २ अप्रमत्ते अपूर्वकरणे च । ३ संज्वलनकषायमध्ये एकः । नवयोगानां मध्य एकः । एवं द्वौ जघन्यप्रत्ययौ आनिवृत्तेः । ४ जघन्यप्रत्ययोर्भंगाः ३६, उत्कृष्टत्रयाणां १०८ सर्वे मिलिताः १४४ अनिवृत्तस्य ।

१ । १ । ९ ।
शांतक्षीणकषाययोः प्रत्ययानाह—
योगेष्वस्ति नवस्वेकः शान्तक्षीणकषाययोः[1] ।
१ । ९ ।
अन्तिमद्वय आह,—
सप्तस्वेकः सयोगेऽसौ, १।७

नियोगः प्रत्ययातिगः ० ॥ ६९ ॥
प्रदोषविघ्नमात्सर्यनिह्नवासादनादयः[2] ।
बंधस्य हेतवो ज्ञेयाः ज्ञानदर्शनरोधयोः ॥ ७० ॥
तितिक्षा व्रतिनां दानं भूतानामनुकम्पनम् ।
सरागसंयमः शौचसंयमासंयमः परः ॥ ७१ ॥
वात्सल्यं मृदुवादित्वं पापकर्मस्वनादरः ।
पुष्कलं कारणैरेतैः सद्वेद्यं कर्म बध्यते ॥ ७२ ॥
शोकस्तपो बधो दुःखमाक्रन्दः परिदेवनम् ।
स्वान्योभयस्थितैरेतैरसातं कर्म गृह्यते ॥ ७३ ॥
तपोधर्मागमस्वार्गिसंघकेवलचक्षुषाम् ।
बध्नात्यवर्णवादेन प्राणी दर्शनमोहनम् ॥ ७४ ॥
कषायोदयतस्तीव्रः परिणामो विनिन्दितः ।
द्वेधा चारित्रमोहस्य कर्मणो बंधकारणम् ॥ ७५ ॥
मिथ्यादृष्टिर्व्रतापेतो बह्वारंभपरिग्रहः ।
आयुर्बध्नाति निःशीलो नारकं दुष्टमानसः ॥ ७६ ॥

---

१ नवयोगानां मध्य एको योगः, एकः संज्वलनलोभ एवं द्वौ प्रत्ययौ, राशौ नव प्रत्ययाः । २ निह्नवं ज्ञानलोपनम्, आसादनं पीड़ाकरणम् ।

उन्मार्गदेशको मायी सशल्यो मार्गदूषकः ।
आयुरर्जति तैरश्चं शठो मूढो दुराशयः ॥ ७७ ॥
निःशीलो निर्व्रतो भद्रः प्रकृत्याल्पकषायकः ।
आयुर्बध्नाति मर्त्यानामल्पारंभपरिग्रहः ॥ ७८ ॥
अकामनिर्जरावालतपः शीलमहाव्रती ।
सम्यक्त्वभूषितो दैवमायुरर्जति शांतधीः ॥ ७९ ॥
वक्रस्वान्तवचस्कायो गौरवी[1] वंचनापरः ।
अशस्तं नाम बध्नाति प्रशस्तमपरस्ततः ॥ ८० ॥
स्वप्रशंसी परद्वेषी जिनशासननिन्दकः ।
नीचैर्गोत्रं प्रबध्नाति विपरीतं ततः परः ॥ ८१ ॥
दानलाभोपभोगादिप्रत्यूहकरणं मतम् ।
निमित्तमन्तरायस्य पंचभेदस्य देहिनः ॥ ८२ ॥
बंधस्य हेतवो येऽमी आस्रवस्यापि ते मताः ।
बंधो हि कर्मणां जंतोरास्रवे सति जायते ॥ ८३ ॥
इति बंधास्रवविशेषप्रत्यया उक्ताः ।

---

अष्टकर्मबन्धः कथ्यते,—

अष्टायुषा विना सप्त षडाद्याः[2] मिश्रकं विना ।
सप्त कर्माणि बध्नंति मिश्रापूर्वानिवृत्तयः ॥ ८४ ॥
मोहायुर्भ्यां विना षट्कं सूक्ष्मो बध्नात्यतस्त्रयः ।
बध्नंति वेद्यमेवैकमयोगो बंधवर्जितः ॥ ८५ ॥

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ७ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | ६ | १ | १ | १ | ० |
| ८ | ८ | ० | ८ | ८ | ८ | ८ | | | | | | | |

---

१ सवर्गः । २ मिश्रंविनाऽद्यषड्गुणस्थानवर्तिनोजीवाः ।

भुंजतेऽष्टापि कर्माणि गुणेषु दशसु स्थिताः ।
शान्तक्षीणौ विना मोहमपरौ घातिभिर्विना ॥ ८६ ॥

८।८।८।८।८।८।८।८।८।८।७।७।४।४।

अष्टावुदीरयन्ते, षट् प्रमत्तांतगुणास्थिताः[1] ।
उदीरयंति चत्वारः षट्कं वेद्यायुषी विना ॥ ८७ ॥
शांतक्षीणाभिधौ, पंच वेद्यायुर्मोहनैर्विना ।
सयोगो नामगोत्रे द्वे अयोगो निरुदीरणः ॥ ८८ ॥
सप्तैवावलिकाशेषे[2] पंचाद्या मिश्रकं विना ।
वेद्यायुर्मोहहीनानि पंच[3] सूक्ष्मकषायकः ॥ ८९ ॥
नामगोत्रद्वयं क्षीणस्तत्रोदीरयते यतिः ।
एकत्रेति त्रयं ज्ञेयं बंधादीनां मनीषिभिः ॥ ९० ॥

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | ८ | ८ | ८ | ८ | ८ | ६ | ६ | ६ | ६ | ५ | ५ | २ | ० |
| ७ | ७ | ० | ७ | ७ | ७ | | | | ५ | | २ | | |

अत्रापक्कपाचनमुदीरणेतिवचनादुदयावलिकायां प्रविष्टायाः कर्मस्थितेर्नोदीरणेति । मरणावलिकायामायुषः, सूक्ष्मे मोहस्य, क्षीणे घातित्रयस्योदीरणा नास्ति, मरणावलिकाशेषे चायुषि मिश्रं न संभवति ।

---

बंधोदयोदीरणाः कथ्यन्ते,—
घातिकल्मषविध्वंसी भुंक्ते कर्मचतुष्टयम् ।
कर्मबन्धव्यतिक्रान्तो निर्योगोऽष्टानुदीरकः[4] ॥ ९१ ॥

---

१ अप्रमत्तादयः । २ मिश्रं विनाऽऽद्य पंचगुणस्थानवर्तिनः आवलिकाशेषे सति पंच कर्माणि उदीरयान्ति । ३ अंतभागे पंच कर्माण्युदीरयति शेष भागे षट् । ४ अष्टकर्मणामुदीरणारहितः ।

द्वितयोदीरको योगी वेद्यस्यैकस्य बंधकः ।
भुंक्ते चत्वार्यघातीनि घातिकर्मनिसुंभकः ॥ ९२ ॥
बंधकौ वेदनीयस्य शांतक्षीणकषायकौ ।
भुंजते सप्त कर्माणि पंचकोदीरणापरौ ॥ ९३ ॥
षट्कं बध्नाति भुंक्तेऽष्टौ दशमः षडुदीरकः ।
द्वयोः क्रमाच्च पंचानां क्षीणसूक्ष्मावुदीरकौ ॥ ९४ ॥
षट्कस्योदीरकाः सप्तबंधकाः क्रमतस्त्रयः ।
अनिवृत्त्यादयः शश्वदष्टकर्माणि भुंजते ॥ ९५ ॥
बध्नंत्युदीरयंत्यन्ये सप्ताष्टौ चाष्ट भुंजते ।
भुंक्तेष्टौदीरयत्यष्ट सप्त बध्नाति मिश्रकः ॥ ९६ ॥
आयुर्बध्नमारभ्य प्रमत्ताख्येऽप्रमत्तताम् ।
यत्समापयते गत्वा सप्तानां बंधकस्ततः ॥ ९७ ॥
अप्रमत्तो अनारंभकत्वादिति विशेषः ।

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| बंध | ७।८ | ७।८ | ७ | ७।८ | ७।८ | ७।८ | ७ | ७ | ७ | ६ | २ | २ | १ | ० |
| उदय | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ७ | ७ | ४ | ४ |
| उदीरण | ८।७ | ८।७ | ८ | ८।७ | ८।७ | ८।७ | ६ | ६ | ६ | ६।५ | ५ | ५।२ | २ | ० |

---

ज्ञानदृष्ट्यावृती वेद्यं मोहनीयायुषी बुधाः ।
नामगोत्रान्तरायाश्च मूलेऽष्ट प्रकृतीर्विदुः ॥ ९८ ॥
क्रमात्पंच नव ज्ञेया द्वे अष्टाविंशतिर्बुधः ।
चतस्रो द्व्यधिकाश्चत्वारिंशद्द्वे पंच चोत्तराः ॥ ९९ ॥
तदित्थम्—५ । ९ । २ । २८ । ४ । ४२ । २ । ५ ।

आर्यावृत्तम् ।

ज्ञेयाः सादिरनादिध्रुवाध्रुवाः स्थानमथ भुजाकाराः ।
अल्पतरावस्थितकस्वामित्वानीह नव बंधाः ॥ १०० ॥

अनुष्टुप् छन्दः ।

बध्नात्यबंधके सादिरनादिः[1] [2] श्रेण्यसंक्रमे ।
ध्रुवोऽभव्येऽध्रुवो बंधे बंधविध्वंसनेऽथ[3] वा ॥ १०१ ॥
कर्मबन्धविशेषो यः सः स्थानमिति[4] कथ्यते ।
भुजाकारो[5] मतः सद्भिर्बद्ध्वाल्पं बहुबंधनम् ॥ १०२ ॥
उक्तोऽल्पतरो बंधो बहु बध्वाल्पबंधनम् ।
सर्वदा बध्नतस्तुल्यं कर्मावस्थितकः स्मृतः ॥ १०३ ॥
कर्मबंधविशेषस्य कर्तृता स्वामिता मता ।
ज्ञातव्यं नवभेदानां बंधानामिति लक्षणम् ॥ १०४ ॥
चत्वारः कर्मणां षण्णां[6] साद्यनादिध्रुवाध्रुवाः ।
वेद्यस्येति विना सादिं त्रयोऽनादिध्रुवाध्रुवाः[7] ॥ १०५ ॥
साद्यध्रुवौ मतौ बंधावायुषौ द्वावबन्धकैः ।
चत्वारोऽपीति ते ज्ञेया उत्तरप्रकृतिष्वपि ॥ १०६ ॥
कषायाः षोडश ज्ञानरोधान्तराययोर्दश ।
उपघातो जुगुप्सा भीर्दर्शनावरणे नव ॥ १०७ ॥

---

१ गुणस्थानान्तरसंक्रमे सति बंधव्युच्छित्तिं कृत्वा पुनः पूर्वगुणस्थान प्राप्तेसति बन्धप्रारम्भः सादिबन्धः । २ अनादिकालक्रमायातबन्धसन्तति रूपोऽनादिबन्धः । ३ यत्र गुणस्थाने कर्म बध्नाति तत्रैव चेन्मुंचति स बंधविध्वंसनस्तस्मिन्नध्रुवबंधः । ४ यथाऽयुष्कर्म षट् गुणस्थानं यावद्बध्नाति ईदृग्विधो यः कर्मबंधविशेषः सः स्थानमिति कथ्यते । ५ कश्चिज्जीव उपशांतकषाये चढितः पश्चान्मोहोदयात्पतितः सूक्ष्मसांपरायानिवृत्तिकरणयोः प्राप्तस्तत्रैकां प्रकृतिं बध्नाति पश्चाद्यथा यथाऽधःपतति तथा तथा बहु बध्नाति, अल्पं बध्वा पश्चाद्बहुबंधनं स भुजाकारबंधः । ६ वेदनीयायूरहितानां । ७ अनुपलम्भान्मयाप्रक्षिप्तोऽयम्पाठः " त्रयोऽनादि " इति ।

मिथ्यात्वागुरुलघ्वाह्वानिर्मिद्वर्णचतुष्टयम् ।
तैजसं कार्मणं सप्त चत्वारिंशत् ध्रुवा मताः ॥ १०८ ॥
[1]आसां भवंति चत्वारः साद्यनादिध्रुवाध्रुवाः ।
साद्यध्रुवा मताः शेषास्तथा सपरिवृत्तयः ॥ १०९ ॥
आहारकद्वयं तीर्थकृत्त्वमायुश्चतुष्टयम् ।
परघातातपोद्योतोच्छ्वासाः शेषा इमा मताः ॥ ११० ॥
इति निःप्रतिपक्षाः ११ ।
गोत्रे संस्थानसंहत्योः षट्कं हास्यचतुष्टयम् ।
वैक्रियिकद्वयं वेद्ये गतयो द्वे नभोगती ॥ १११ ॥
चतुष्कमानपूर्वीणां दशयुग्मानि जातयः ।
औदारिकद्वयं वेदा ज्ञेयाः सपरिवृत्तयः ॥ ११२ ॥
सप्रतिपक्षा इत्यर्थः । ६२ ।
जिनैः [2]स्थानानि चत्वारि भुजाकारास्त्रयस्त्रयः ।
बंधे चाल्पतराः प्रोक्ताश्चत्वारोऽ[3]ष्टस्ववस्थिताः ॥ ११३ ॥
[4]बंधस्थानानि ८।७।६।१ । [5]भुजाकाराः १,६।६,७।७,८ ।
[6]अल्पतराः ६,१।७,६।८,७। [7]अवस्थिताः ८,८।७,७।६,६।१,१।

१ ध्रुवप्रकृतीनां । २ मूल-प्रकृतीनां चत्वारिबन्धस्थानानि । ३ कर्मसु । ४ मिश्रं विनाऽप्रमत्तं यावत् अष्टैव कर्माणि बध्नाति, मिश्रापूर्वानिवृत्तिकेषु सप्तकर्माणि बध्नात्यायुर्विना, सूक्ष्मसांपराये षट्कर्माणि बध्नाति मोहं विना, उपरिस्थगुणस्थानेषु एकं वेद्यकं सातकं बध्नाति, इति कर्मबंधे चत्वारि स्थानानि भवंति । ५ उपशांतादिषु त्रिष्वेककं कर्म बध्नाति, सूक्ष्मे षट्, अपूर्वानिवृत्तिकयोः सप्त, पुनः सप्त, अप्रमत्तादधोऽष्टकर्माणि बध्नातीति भुजाकारबंधः । ६ सूक्ष्मसांपराये षट्, उपशांतादिष्वेकं, अपूर्वानिवृत्तिकयोः सप्त, सूक्ष्मे षट्, अप्रमत्तपर्यन्तमष्टकर्माणि, अपूर्वानिवृत्तिकयोः सप्त कर्माणि बध्नंति । ७ अप्रमत्तं यावत् मिश्रं विना अष्ट अष्ट, अपूर्वानिवृत्तिकयोः सप्त सप्त, सूक्ष्मे षट् षट्, उपशांतादिष्वेकैकं कर्म बध्नाति ।

दर्शनावरणे त्रीणि स्नानानि दश मोहने ।
नाम्नोऽष्टैषु भुजाकाराः शेषेषु स्थानमेककम् ॥ ११४ ॥
स्थानानि नवकं षट्कं चतुष्कं त्रीणि दृग्रुधि ।
भुजाकारोऽत्र वाच्योऽल्पतरोऽवास्थितको बुधैः ॥ ११५ ॥
बंधस्थानानि ९।६।४ । भुजाकाराल्पतरौ ४,६।६,९।६,४।
९,६ । अवस्थिताः ९,९।६,६।४,४ ।
नवकं सकलाः षट्कं स्त्यानगृद्धित्रयं विना ।
चतुष्कं प्रचलानिद्राहीनाः स्थानेष्विति त्रिषु ॥ ११६ ॥
९ । ६ । ४ ॥
द्वावाद्यौ नव, मिश्राद्याः षट् षट् बध्नंति दृग्रुधि ।
अपूर्वान्ताश्चतस्रोऽत्रापूर्वाद्याः सूक्ष्मपश्चिमाः ॥ ११७ ॥
९ । ९ । ६ । ६ । ६ । ६ । ६ ।
अपूर्वप्रथमसप्तमभागे ६ । अपूर्वद्वितीयसप्तमभागादारभ्य याव-
त्सूक्ष्मं ४ ।

---

द्व्येकाग्रे विंशती सप्तदश बंधे त्रयोदश ।
नव पंचचतुष्कत्रिद्व्येकस्थानानि मोहने ॥ ११८ ॥
२२ । २१ । १७ । १३ । ९ । ५ । ४ । ३ । २ । १ ।
द्वाविंशतिः समिथ्यात्वाः कषायाः षोडशैकक: ।
वेदो हास्यादिकेष्वेकं युग्मं भयजुगुप्सते ॥ ११९ ॥
१ । १६ । १ । २ । १ । १ । मिलिताः २२ ।
[1]एषादिमे द्वितीये सा निर्मिथ्यात्वनपुंसकः ।
न्यूनाऽनंतानुबंधिस्त्रीवेदैर्मिश्रेऽव्रते तथा ॥ १२० ॥

---

१ प्रथम गुणस्थाने २२, मिथ्यात्वं विनैकविंशतिः सासादने, अनंता-नबंधिभिर्विना सप्तदश मिश्राव्रतयोः ।

मिथ्यादृष्टौ २२ । प्रस्तारः । २ । भंगाः ६ । सासने २१ ।
भंगाः ४ । मिश्रासंयतयोः १७ । भंगाः २ ।

| मिथ्यादृष्टौ | सासने | मिश्रे | असंयते |
| --- | --- | --- | --- |
| २ | २ | २ | २ |
| २।२ | २।२ | २।२ | २।२ |
| १।१।१ | १।१ | १ | १ |
| १६ | १६ | १२ | १२ |
| १ | | | |

हीनाः द्वितीयकोपाद्यैर्देशे षष्ठे तृतीयकैः ।
सप्तमाष्टमयोर्ज्ञेयाः शोकारतिंविना कृताः ॥ १२१ ॥

| देशे १३ । | | प्रमत्ते ९ । | | अप्रमत्तापूर्वयोः ९ । | |
| --- | --- | --- | --- | --- | --- |
| २ | भंगौ | २ | भंगौ | २ | भंगः १ |
| २।२ | २ | २।२ | २ | २ | |
| १ | | १ | | १ | |
| ८ | | ४ | | ४ | |

सन्ति पुंवेदसंज्वालाः संज्वाला नवमे क्रमात् ।
विनैकद्वित्रिभिर्बन्धे पंच स्थानानि मोहने ॥ १२२ ॥
५।४।३।२।१।
षट् स्युर्द्वाविंशतेर्भङ्गाश्चत्वारस्त्वेकाविंशतेः ।
स्थानत्रये ततो द्वौ द्वावेकोऽतो मोहबन्धने ॥ १२३ ॥
६।४।२।२।२।२।१।१।१।१।

एषामानयनमाह,—

अभ्यस्ते युग्मयुग्मेन वेदानां त्रितये सति ।
भंगा द्वाविंशतेर्बन्धे मिथ्यादृष्टेः षडीरिताः । ६ ॥ १२४ ॥

---

१ प्रथमभागे पुंवेदसज्वलनाः, द्वितीये संज्वलनः, तृतीये क्रोधं विना त्रयः चतुर्थे मानंविना द्वौ पंचमे मायां विनैकः ।

विना षण्ढं हते द्वाभ्यां वेदाभ्यां युगलद्वये ।
सन्त्येकविंशतेर्बन्धे चत्वारः सासने तु ते । ४ ॥ १२५ ॥
मिश्रासंयतयोः सप्तदशबंधविधायिनोः ।
संयतासंयतस्थस्य त्रयोदशकबंधिनः ॥ १२६ ॥
प्रमत्तस्य च विज्ञेयं नवबंधविधायिनः ।
युगभंगद्वयं प्राज्ञैर्बन्धस्थानत्रये स्फुटम् । २ ॥ १२७ ॥
अप्रमत्तो यतोऽपूर्वः शोकारत्योरबंधकौ ।
एकैकोऽतस्तयोर्भङ्गो विज्ञेयो नवबंधिनोः ॥ १२८ ॥
एकद्वित्रिचतुःपंचबंधके चानिवृत्तिके ।
एकैकः कथितो भंगो बंधस्थानेषु पंचसु ॥ १२९ ॥
५।४।३।२।१। एकैको भंगाः १।१।१।१।१।
मोहनीयभुजाकारा विंशतिर्गदिता बुधैः ।
बंधा एकादशैतास्मिन् क्रमादल्पतराः पुनः ॥ १३० ॥
द्वावव्यक्तौ मतौ बंधौ त्रयस्त्रिंशदवस्थिताः ।
चतुर्विधेति विज्ञेया मोहे बंधप्ररूपणा ॥ १३१ ॥
२०।११।२।३३।

भुजाकाराः—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ९ | १३ | १७ | २१ |
| २ | ३ | ४ | ५ | ९ | १३ | १७ | २१ | २२ |
| १७ | १७ | १७ | १७ | १७ | १७ | २१ | २२ | |
| | | | | | २१ | २२ | | |
| | | | | | २२ | | | |

अल्पतराः—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| २२ | १७ | १३ | ९ | ५ | ४ | ३ | २ |
| १७ | १३ | ९ | ५ | ४ | ३ | २ | १ |
| १३ | ९ | ५ | | | | | |

एकं बध्नन्नधो गत्वा बध्नाति प्रकृतिद्वयम् ।
तत्र मृत्वाऽमरो भूत्वा जीवः सप्तदशार्जति ॥ १३२ ॥
सर्वत्रेत्युच्चारणा कार्या ।
अव्यक्तः कथ्यते,—
सूक्ष्मोपशमकोऽधस्तादवतीर्यानिवृत्तिकः ।
भूत्वा स्वीकुरुते कश्चिदेकां प्रकृतिमंगवान् ॥ १३३ ॥
सूक्ष्मोपशमको मृत्वा देवभूयं गतोऽथवा ।
बध्नाति प्रकृतीर्जीवः कश्चित्सप्तदश स्फुटम् ॥ १३४ ॥
अव्यक्तभुजाकारौ शून्यतः ०।१–१७ इति द्वौ

आर्यावृत्तम् ।

क्रमतोऽत्र भुजाकाराऽल्पतराव्यक्ताख्यबंधसंक्षेपे ।
सद्भिरवस्थितसंज्ञा बंधविशेषा विबोद्धव्याः ॥ १३५ ॥
भुजाकाराः २०। अल्पतराः ११। अव्यक्तौ द्वौ २। संक्षेपः ३३।
स्यात्त्रिभिर्विंशतिः पंच षडष्टनवभिः क्रमात् ।
दशैकादशभिर्युक्ता स्थानमेकं च नामनि ॥ १३६ ॥
२३।२५।२६।२८।२९।३०।३१।१।
क्रमेण गतियुक्तानि श्वभ्रातिर्यङ्नृनाकिनाम् ।
एकपंचत्रिपंचाहुर्बन्धस्थानानि नामनि ॥ १३७ ॥
१।५।३।५।
तत्र श्वभ्रद्वयं हुडं निर्माणं दुर्भगास्थिरे ।
पंचेन्द्रियमनादेयमयशो दुःस्वराशुभे ॥ १३८ ॥
तेजोवैक्रियिकद्वन्द्वं कार्मणासन्नभोगती ।
वर्णाद्यगुरुलघ्वादित्रसादीनां चतुष्टयम् ॥ १३९ ॥

इत्यष्टाविंशतिस्थानमेकं मिथ्यात्ववाहिनः।
युक्तं श्वभ्रर्तिपंचाक्षपूर्णैर्बध्नंति जन्तवः॥ १४० ॥
भंगः १।
एकाक्षविकलाक्षाणां बध्यन्ते नात्र जातयः।
श्वभ्रगत्या समं तासां सर्वदा वृत्त्यभावतः॥ १४१ ॥
दशभिर्नवभिः षड्भिः पंचभिर्विंशतिस्त्रिभिः।
युक्तस्थानानि पंचेति तिर्यग्गतियुतानि वै॥ १४२ ॥
३०। २९। २६। २५। २३।
तत्र संहतिसंस्थानषट्कस्यैकतरद्वयम्।
नभोगतियुगस्यैकतरमौदारिकद्वयम्॥ १४३ ॥
वर्णाद्यगुरुलघ्वादित्रसादीनां चतुष्टयम्।
स्थिरादिपंचयुग्मेष्वेकतरं पंचाक्षनिर्मिती॥ १४४ ॥
तैजसं कार्मणं तिर्यग्द्वयमुद्योतमादिमम्।
पंचाक्षोद्योतपर्याप्ततिर्यग्गतियुतामिमाम्॥ १४५ ॥
मिथ्यादृष्टिः प्रबध्नाति त्रिंशतं सासनोऽपि च।
एतां द्वितीयकां हुंडासंप्राप्तापाकृतां पराम्॥ १४६ ॥

तत्र प्रथमत्रिंशति षट्संस्थान षट् संहननभोगतियुगलस्थिरादिषट् युगलानि। ६। ६। २। २। २। २। २। २। २। अन्योन्याभ्यस्तानि भंगा। ४६०० ।

द्वितीयत्रिंशति सासनेऽतिमसंस्थानसंहनने बंधं न गच्छतस्तद्योग्यतीव्रसंक्लेशाभावात्। अतः;—५। ५। २। २। २। २। २। २। २। अन्योन्याभ्यस्तानि भंगाः ३२००।
एते पूर्वप्रविष्टाः पुनरुक्ता इति न गृह्यन्ते।

परा त्रिंशत्तृतीयेयं तिर्यग्द्वितयकार्मणे ।
तैजसौदारिकद्वन्द्वहुंडासंप्राप्तदुर्भगम् ॥ १४७ ॥
त्रसाद्यगुरुलघ्वादिवर्णादीनां चतुष्टयम् ।
विकलेन्द्रियजात्येकतरं दुःस्वरनिर्मिती ॥ १४८ ॥
यशःस्थिरशुभद्वन्द्वत्रितयैकतरत्रयम् ।
उद्योतासन्नभोरीती अनादेयं तृतीयकम् ॥ १४९ ॥
विकलोद्योतपर्याप्ततिर्यग्गतियुतामिमाम् ।
मिथ्यात्वकलितस्वान्तो जीवो बध्नाति दुर्मनाः ॥ १५० ॥

अत्र विकलेन्द्रियाणां हुंडसंस्थानमेवैकं, तथैतेषां बंधोदययोर्दुःस्वरमेवेति । तिस्रो जातयस्त्रीणि युगलानि । ३ । २ । २ । २ अन्योन्याभ्यस्तानि, भंगाः २४ ।

यथैतास्त्रिंशतास्तिस्र एकोनत्रिंशतस्तथा ।
विशेषोऽयं परं तासु यदुद्योतो न बध्यते ॥ १५१ ॥

एतासु पूर्वोक्ता भंगाः ४६०८ । २४ ।

षड्विंशतिरियं तेजास्तिर्यग्द्वितयकार्मणे ।
वादरौदारिकैकाक्षहुंडपर्याप्तदुर्भगाः ॥ १५२ ॥
उद्योतातपयोरेकं प्रत्येकं स्थावरं परम् ।
शुभद्वन्द्वयशोद्वन्द्वास्थिरद्वन्द्वत्रयैककम् ॥ १५३ ॥
निर्मित्त्वागुरुलघ्वादिवर्णादीनां चतुष्टयम् ।
अनादेयमितीमां च स्वीकरोति कुदर्शनः ॥ १५४ ॥
वादरैकाक्षपर्याप्ततिर्यग्गतिभिरन्विताम् ।
तथैकतरसंयुक्तामातपोद्योतयोरपि ॥ १५५ ॥

अत्राष्टांगाभावादेकेन्द्रियस्यांगोपांगं नास्ति । संस्थानमप्ये-

कं हुंडमेव, यस्मात्तस्मादातपोद्योतास्थिरास्थिरशुभाशुभयशोऽ-
यशोयुगानि । २ । २ । २।२। अन्योन्याभ्यस्तानि भंगाः १६ ।

षड्विंशतिरियं तस्य जायते पंचविंशतिः ।
निरुद्योतातपा सूक्ष्मप्रत्येकद्वितयैकयुक् ॥ १५६ ॥

अत्र प्रथमायां पंचविंशतौ सूक्ष्मसाधारणे भवनादीशानान्ताः देवाः न बध्नन्ति । ततोऽत्र यशःकीर्त्तिं निरुध्य स्थिरास्थिरभंगौ शुभाशुभभंगाभ्यस्तौ ४ । अयशःकीर्तिं निरुध्य वादरप्रत्येकस्थिरशुभयुगानि । २ । २ । २ । २ । अन्योन्याभ्यस्तान्ययशःकीर्तिभंगाः १६ । द्वयेऽपि । २० ।

पंचविंशतिरत्रान्या तिर्यग्द्वितयकार्मणे ।
पंचाक्षविकलाक्षैकतरमौदारिकद्वयम् ॥ १५७ ॥
प्रत्येकागुरुलघ्वाह्वे तेजोऽपर्याप्तनिर्मिती ।
उपघातायशोहुंडाऽस्थिरासंप्राप्तदुर्भगम् ॥ १५८ ॥
वादरत्रसवर्णाद्यनादेयमशुभं त्विमाम् ।
सतिर्यग्गत्यपर्याप्तत्रसां बध्नाति वामदृक् ॥ १५९ ॥

अत्र द्वितीयायां पंचविंशतौ परघातोच्छ्वासनभोगतिदुःस्वराणामपर्याप्तेन सह बंधो नास्ति विरोधात् । अपर्याप्तकाले चैषामुदयाभावादत्र चत्वारो जातिभंगाः । ४ ।

त्रयोविंशतिरेषात्र तेजस्तिर्यग्द्वयाशुभे ।
कार्मणौदारिके हुंडमयशोवर्णचतुष्टयम् ॥ १६० ॥
एकाक्षागुरुलघ्वाह्वे दुर्भगं स्थावरास्थिरे ।
उपघातमनादेमपर्याप्तकानिर्मिती ॥ १६१ ॥
सूक्ष्मप्रत्येकयुग्मैकतरे मिथ्यात्वदूषितः ।
वध्नात्यपूर्णकैकाक्षतिर्यग्गतियुतामिमाम् ॥ १६२ ॥

अत्र संहननबंधो नास्ति, एकाक्षेषु संहननोदयाभावात् । ततः सूक्ष्मबादरयोः प्रत्येकसाधारणाभ्यामभ्यासे चत्वारो भंगाः ४। इत्थं तिर्यग्गतियुताः सर्वे भंगाः, ९३०८ ।

विंशतिर्दशभिर्युक्ता नवभिः पंचभिः क्रमात् ।
नृगत्यां त्रीणि जायंते बंधस्थानानि नामनि ॥ १६३ ॥

३० । २९ । २५ ।

त्रिंशदेषाऽत्र पंचाक्षं नृद्वयौदारिकद्वये ।
सुस्वरं सुभगादेयमाद्ये संस्थानसंहती ॥ १६४ ॥
शुभस्थिरयशोयुग्मैकैकं शस्तनभोगतिः ।
वर्णाद्यगुरुलघ्वादित्रसादीनां चतुष्टयम् ॥ १६५ ॥
तीर्थकृत् कार्मणं तेजोनिर्मिद्बध्नात्यसंयतः ।
इमांनृगतिपंचाक्षपूर्णतीर्थकरैर्युतां ॥ १६६ ॥
न दुर्भगमनादेयं दुस्वरं याति बंधतां ।
सम्यक्त्वतीर्थकृत्त्वाभ्यां सह बंधविरोधतः ॥ १६७ ॥

सुभगसुस्वरादेयानामेव यतोऽत्र बंधस्ततस्त्रीणि युगानि. २ । २ । २ । अन्योन्याभ्यस्तानि, भंगाः ८।

विना तीर्थकृता त्रिंशदेकोनत्रिंशदस्त्यमूम् ।
युक्तां मनुष्यगत्याद्यैर्बध्नीतो मिश्रनिर्व्रतौ ॥ १६८ ॥

२९ । अत्राष्टौ भंगाः पुनरुक्ताः ८ ।

एकोनत्रिंशदन्यैवं द्वितीयैकतरैर्युता ।
युग्मानां सुस्वरादेयसुभगानां त्रिभिः स्फुटम् ॥ १६९ ॥
एतां संहतिसंस्थानषट्कैकतरसंयुताम् ।
सनभोगतियुग्मैकतरां बध्नाति वामदृक् ॥ १७० ॥

२।२।२।२।२।२।६।६।२। एषामन्योन्याभ्यासे
भंगाः ४६०८।
तृतीयापि द्वितीयेव बध्यते स्रस्तदृष्टिना।
हुंडासंप्राप्तके त्यक्त्वा तच्छेषैकतरान्विता ॥ १७१ ॥
२।२।२।२।२।२।५।५।२। एषामन्योन्यबंधे भंगाः ३२००।
एते पुनरुक्तत्वान्न गृह्यन्ते।
पंचविंशतिरेषात्र मनुष्यद्वयकार्मणे।
हुंडासंप्राप्ततेजांसि पंचाक्षौदारिकद्वये ॥ १७२ ॥
प्रत्येकागुरुलघ्वाह्वस्थूलापर्याप्तदुर्भगम्।
उपघातमनादेयं त्रसं वर्णचतुष्टयम् ॥ १७३ ॥
अयशोऽस्थिरनिर्माणमशुभं स्वीकरोत्यमूम्।
नृगत्यपर्याप्तपंचाक्षयुक्तां मिथ्यात्ववासितः ॥ १७४ ॥
२५।
संक्लेशाद्बध्यमानेन नापूर्णेन सह स्फुटम्।
शुद्धानां कर्मणां बन्धः स्थिरादीनां प्रजायते ॥ १७५ ॥
यतस्ततो भंगाः २। एवं मनुष्यगतेः सर्वे भंगाः ४६१७।
एकद्वित्रिचतुर्न्यूना द्वात्रिंशद्गदिता क्रमात्।
चत्वारि देवगत्यामा निर्गत्येकं तु पंचमाम् ॥ १७६ ॥
३१।३०।२९।२८।१।
तत्रैकत्रिंशदाद्येयं कार्मणं त्रिदशद्वयम्।
पंचेन्द्रियाद्यसंस्थाने तेजोवैक्रियिकद्वयम् ॥ १७७ ॥
वर्णाद्यगुरुलघ्वादित्रसादीनां चतुष्टयम्।
सुभगं सुस्वरं शस्तव्योमरीतियशःशुभम् ॥ १७८ ॥

स्थिरमाहारकद्वन्द्वं निर्माणादेयतीर्थकृत् ।
अर्जयत्यप्रमत्तोऽमूमपूर्वकरणोऽपि च ॥ १७९ ॥
तीर्थकृत्त्वपर्याप्तपंचाक्षाहारकद्वयैः ।
एकत्रिंशदियं युक्ता स्थानं देवगतौ मतम् ॥ १८० ॥
देवगत्या समं बंधः संहतेर्नात्र जायते ।
उदयाभावतस्तस्या यतो देवेषु सर्वदा ॥ १८१ ॥
ततो भंगः १ ।
एकत्रिंशदियं त्रिंशत्त्यक्ता तीर्थकृता भवेत् ।
जायेते संयतौ तस्या बंधकौ सप्तमाष्टमौ ॥ १८२ ॥
न बंधोऽत्रास्थिरादीनां यतः संक्लेशभाविनाम् ।
विशुद्ध्या सममेतेषां सदा बंधविरोधतः ॥ १८३ ॥
ततो भंगः २ ।
एकत्रिंशद्भवत्यत्र निरस्ताहारकद्वया ।
एकोनत्रिंशदाद्यैषा बध्यते सप्तमाष्टमैः ॥ १८४ ॥
भंगः १ ।
एकोनत्रिंशदन्यैवं बध्यतेऽस्यां परं त्रिभिः ।
यशः शुभस्थिरद्वन्द्वेष्वेकैकं निर्व्रतादिभिः ॥ १८५ ॥

अत्र देवगत्या सहोद्योतो न बध्यते तत्र तस्योदयाभावात् । तिर्यग्गतिमपाकृत्य तस्यान्यया गत्या सह बंधविरोधात् । देहदीप्तिर्देवानां तर्हि कुतः? वर्णनामकर्मोदयात् । अत्र त्रीणि युगानि २ । २ । २ । अन्योन्याभ्यस्तानि, भंगाः ८ ।

---

१ अप्रमत्तधारी अपूर्वगुणधारी यामेकत्रिंशतं देवगतिकारणां बध्नाति तस्या भंग एक एव भवति यतो देवगतौ संहननस्थिरादीनां युग्मान्यपि न संति।

एकात्रिंशद्विना तीर्थकर्त्तृत्वाहारकद्वयैः ।
अष्टाविंशतिराद्येमां गृह्णीतः सप्तमाष्टमौ ॥ १८६ ॥
अत्र भंगः १ । पुनरुक्तः ।
अष्टाविंशतिरेकोनत्रिंशदस्ति द्वितीयका ।
अन्या तीर्थकरेणोना तं बध्नंति षडादिमाः ॥ १८७ ॥
अप्रमत्तादीनामुपरिजानामस्थिराशुभायशसां बंधाभावाद्भंगाः८
एवं देवेषु भंगाः १९ ॥
अपूर्वादित्रयेऽत्रैकं यशोभंगास्तु नामनि ।
चतुर्दशसहस्राणि पंचपंचाशतं विना ॥ १८८ ॥
१३९४५ ।
द्वाविंशतिर्भुजाकारा नामन्यल्पतराः पुनः ।
एकविंशातिरव्यक्ता स्त्रयः सर्वेऽप्यवस्थिताः ॥ १८९ ॥
२२।२१।३।४६।

नामनि भुजाकाराः—

| १ | २३ | २५ | २६ | २८ | २९ | ३० |
|---|---|---|---|---|---|---|
| २८ | २५ | २६ | २८ | २९ | ३० | ३१ |
| २९ | २६ | २८ | २९ | ३० | ३१ | |
| ३० | २८ | २९ | ३० | ३१ | | |
| ३१ | २९ | ३० | | | | |
| | ३० | | | | | |
| ४ | ५ | | ३ | ३ | २ | १ |

अल्पतराः—

| ३१ | ३० | २९ | २८ | ३१ | ३० | २९ | २८ | २६ | २५ |
|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | ३० | २९ | २८ | २६ | २५ | २३ |
| | | | | २९ | २८ | २६ | २५ | २३ | १ |
| | | | | २ | २६ | २५ | २३ | २ | |
| | | | | | २५ | २३ | ३ | | |
| | | | | | २३ | ४ | | | |
| | | | | | ५ | | | | |

अवतीर्योपशान्ताऽधो भूत्वा सूक्ष्मकषायकः ।
स्वीकरोति यशःकीर्तिं शमकत्वमधिष्ठितः ॥ १९० ॥
तत्र मृत्वाऽथ वा शान्तो गृह्णात्यमरतां गतः ।
त्रिंशतं नृगतिश्लिष्टमेत्रिंशतमप्यसौ ॥ १९१ ॥

अव्यक्ताः भुजाकाराः शून्यतः ०।१–३०–३१ ते सन्ति भुजाकाराल्पतराव्यक्तकाः समासतो ज्ञेयाः, चत्वारिंशद्वल्का बंधाः षड्भिस्त्ववस्थिताः ४६ । भुजाकाराः २२ । अल्पतराः २१ । अव्यक्ताः ३ । सर्वे मिलिता अवस्थितकाः ४६ ।

इति स्थानबंधः समाप्तः ।

---

समिथ्यात्वेन बध्यन्ते सर्वाः प्रकृतयोऽगिना ।
विनैवाहारकद्वन्द्वतीर्थकर्तृत्वनामाभिः ॥ १९२ ॥
सम्यक्त्वंतीर्थकर्तृत्वे वृत्तमाहारकद्वये ।
बंधस्य हेतुरन्यासु मिथ्यात्वासंयमादयः ॥ १९३ ॥

गुणस्थानेषु प्रकृतीनां स्वामित्वं कथ्यते–

हीनास्तीर्थकराहारद्वन्द्वाभ्यां प्रथमे मताः ।
विना नरसुरायुर्भ्यां मिश्रके पूर्विकाः पुनः ॥ १९४ ॥
तीर्थकृन्नृसुरायुर्भिश्चतुर्थे सहिता मताः ।
आहारद्वयेनामा प्रमादपरिवर्जिताः ॥ १९५ ॥

मिथ्यात्वादिषु सप्तसु,—

| | | | | | | |
|---|---|---|---|---|---|---|
| ११७ | १०१ | ७४ | ७७ | ६७ | ६३ | ५९ |
| १६ | २५ | ० | १० | ४ | ६ | १ |

अपूर्वे सप्तसु भागेषु—

| | | | | | | |
|---|---|---|---|---|---|---|
| ५८ | ५६ | ५६ | ५६ | ५६ | ५६ | २६ |
| २ | ० | ० | ० | ० | ३० | ४ |

अनिवृत्तौ पंचसु भागेषु—

| | | | | |
|---|---|---|---|---|
| २२ | २१ | २० | १९ | १८ |
| १ | १ | १ | १ | १ |

सूक्ष्मादिषु—

| | | | |
|---|---|---|---|
| १७ | १ | १ | ० |
| १६ | ० | ० | १० |

तत्र मिथ्यात्वनपुंसकवेदनरकायुर्नरकद्वयप्रथमजातिचतुष्कसूक्ष्मसाधारणातपापर्याप्तासंप्राप्तहुंडस्थावराणां षोडशानां प्रकृतीनां मिथ्यादृष्टौ बंधविच्छेदः १६ । स्त्यानगृद्धित्रयतिर्यगायुस्तिर्यग्द्वयप्रथमकषायचतुष्कानादेयस्त्रीवेदनीचोद्योतदुःस्वरसंहननसंस्थानमध्यचतुष्कद्वयदुर्भगाप्रशस्तनभोगतीनां पंचविंशतीनां सासादने २५ । मिश्रं व्यतिक्रम्य, द्वितीयकषायचतुष्काद्यसंहनननरायुर्नरद्वयौदारिकद्वयानां दशानामसंयते १० । चतुर्णां तृतीयकषायाणां संयतासंयते ४ । शोकारत्यसातास्थिराशुभायशसां षण्णां प्रमत्ते ६ । एकस्य देवायुषोऽप्रमत्ते १ । अपूर्वस्य प्रथमे सप्तमभागे द्वयोर्निद्राप्रचलयोः २ । तैजसकार्मणपंचाक्षस्थिरदेवद्वयवैक्रियिकद्वयप्रथमसंस्थानशुभत्रसाद्यगुरुलघ्वादिवर्णादिचतुष्टयत्रयसुभगसुस्वरादेयनिर्माणाशस्तनभोगत्याहारकद्वयतीर्थकृतां त्रिंशतः षष्ठे ३० । हास्यरतिजुगुप्साभियां चतसृणां सप्तमे ४ । पुंवेदसंज्वालक्रोधमानमायालोभानां पंचानां क्रमादनिवृत्तिपंचभागेषु ५ । उच्च-

गोत्रयशोदर्शनावृतिचतुष्कज्ञानावृतिपंचकान्तरायपंचकानां षोडशकानां सूक्ष्मसांपराये १६ । शान्तक्षीणकषायौ व्यतीत्यैकस्य सातस्य सयोगे बंधविच्छेदो द्रष्टव्यः ।

इति स्वामित्वं समाप्तम् ॥

गत्यादाविति योग्यानां प्रकृतीनां यथागमम् ।
स्वामित्वमवबोद्धव्यं सिद्धानामोघरूपतः ॥ १९६ ॥

इति प्रकृतिबंधः समाप्तः ।

---

त्रयाणां सांतरायाणां प्रकर्षेणाद्यकर्मणाम् ।
कोटीकोट्यः स्थितिस्त्रिंशत्सागराणामुदाहृताः ॥ १९७ ॥
सप्ततिर्मोहनीयस्य विंशतिर्नामगोत्रयोः ।
आयुषोऽस्ति भयस्त्रिंशत्समुद्राणां स्थितिः परा ॥ १९८ ॥
सप्तस्वब्दशतं वार्द्धिकोटीकोटीस्थितेर्बुधैः ।
[१]आबाधायुषि विज्ञेया पूर्वकोटित्रिभागता ॥ १९९ ॥
प्रकृतीनां पराऽऽबाधा सर्वासामनुरूपतः ।
सान्तर्मुहूर्त्तमुद्दिष्टा जघन्याखिलकर्मणाम् ॥ २०० ॥
संज्ञी पंचेन्द्रियः पूर्णो घोरमिथ्यात्ववासितः ।
कर्मणामिह सप्तानामुत्कृष्टां कुरुते स्थितिम् ॥ २०१ ॥
सम्यग्दृष्टिरसद्दृष्टिः पर्याप्तौ कुरुतः स्थितिम् ।
प्रकृष्टमायुषो जीवौ शुद्धिसंक्लेशभाजिनौ ॥ २०२ ॥

---

१ सप्तसु कर्मसु एकस्याः कोटीकोटीस्थितेः वर्षशतं वर्षशतमाबाधा विज्ञेया, आबाधाकिमुच्यते—उदीरणां विना कर्मपरमाणवो यावत्कालपर्यन्तं नोदीयंते तावत्कालमाबाधास्थितिविज्ञेया । आयुषि पूर्वकोटेस्त्रिभागता, पूर्वा एते २३२३२३२३$\frac{1}{3}$ ।

सम्यग्दृष्टिरसंक्लिष्टो जघन्यां कुरुते स्थितिम् ।
सप्तानां जीवितव्यस्य मिथ्यादृष्टिः कुमानसः ॥ २०३ ॥
तत्रोत्कृष्टाऽऽबाधा—
आद्यानां सांतरायाणां त्रयाणां कर्मणां त्रयः ।
सहस्राः सप्त मोहस्य द्वौ ज्ञेयौ नामगोत्रयोः ॥ २०४ ॥
३०००।३०००।३०००।३०००।७०००।२०००।२००० ।
त्रयस्त्रिंशज्जिनैर्लक्षाः सत्रिभागा निवेदिताः ।
आबाधा जीवितव्यस्य पूर्वकोटीस्थितेः स्फुटम् ॥ २०५ ॥
पूर्वाणां त्रयस्त्रिंशल्लक्षा इति शेषः । ३३ $\frac{1}{3}$
कर्मणामिह सप्तानां सा त्रैराशिकतः क्रमात् ।
आनेतव्याऽऽयुषो भागं हृत्वा दक्षैस्त्रिभिः पुनः ॥ २०६ ॥
यावत्कालमुदीयन्ते न कर्मपरमाणवः ।
उदीरणां विनाऽऽबाधा तावत्कालेऽभिधीयते ॥ २०७ ॥
[१]आबाधा नास्ति सप्तानां स्थितिः कर्मनिषेचनम् ।
कर्मणामायुषोऽवाचि स्थितिरेव निजा पुनः ॥ २०८ ॥

पंचसंग्रहाभिप्रायेणेदं; सिद्धान्ताभिप्रायेण पुनरायुषोऽप्याबाधो नास्ति; स्थितिः कर्मनिषेचनम् ।

[२]आबाधोर्द्धस्थितावस्यां समयं समयं प्रति ।
कर्माणुस्कन्धनिक्षेपो निषेकः सर्वकर्मणाम् ॥ २०९ ॥

---

१ अपरसिद्धांताभिप्रायेण सप्तकर्मणामाबाधो नास्तिं, तर्हि किमस्ति? कर्मनिषेचनं । कर्मनिषेचनं किं गालनं शोषणं वाऽपोषणं, आयुष्कर्मणोऽप्यात्मीया स्थितिः कथिता । पंचसंग्रहाभिप्रायेण सप्तानां कर्मणामाबाधाऽस्ति, आयुष्कर्मणोऽपि ज्ञातव्यं । २ सर्वकर्मणामाबाधोर्द्धस्थितावस्यां कर्मणामणुस्कंधयोर्निक्षेपः निषेकः प्रोच्यते समयं समयं प्रति ।

परतः परतः स्तोकः पूर्वतः पूर्वतो बहुः ।
समये समये ज्ञेयो यावत्स्थितिसमापनम् ॥ २१० ॥

स्वां स्वामाबाधां मुक्त्वा सर्वकर्मणां निषेकाः वक्तव्यास्तेषां च गोपुच्छाकारेणापस्थितिः[1] ॥

उत्तरप्रकृतीनां स्थितिः कथ्यते—

ज्ञानदृग्रोधविघ्नानामसातस्य च विंशतेः ।
कोटीकोट्यः स्थितिस्त्रिंशद्विज्ञातव्या सरस्वताम् ॥ २११ ॥

२० कर्मणाम् ३० कोटीकोट्यः ।

मिथ्यात्वे सप्ततिः कोटीकोट्यः पंचदशोदिताः ।
सातस्त्रीनरयुग्मेषु चत्वारिंशत्क्षुधादिषु ॥ २१२ ॥

मिथ्यात्वे कर्म १, ७० को. । सातादिषु कर्म ४, १५ को. । षोडशसु कषायेषु १६, ४० को. ।

श्वभ्रदेवायुषोरब्धित्रयस्त्रिंशत्परा स्थितिः ।

२ । ३३ सा. ।

तिर्यङ्नरायुषोरुक्ता त्रिपल्योपमसम्मिता ॥ २१३ ॥

२ । ३ प. ।

नीचैर्गोत्रारती शोको जुगुप्सा भीर्नपुंसकम् ।
श्वभ्रतिर्यग्द्वये हुंडं पंचांक्षं कर्मतेजसी ॥ २१४ ॥
उद्योतौदारिकद्वन्द्वे निर्मिद्वैक्रियिकद्वयम् ।
वर्णागुरुत्रसादीनि चतुष्कान्यास्थिराशुभे ॥ २१५ ॥
एकाक्षासन्नभोरीती दुर्भगं स्थावरातपौ ।
असंप्राप्तमनादेयं दुःस्वरायशसी मता ॥ २१६ ॥

---

१ यथा गोपुच्छमुपरिष्टात्स्थूलाऽग्रेऽग्रे क्षीणा तदाकारेण सर्वेषां कर्मणां निषेकाः वक्तव्याः, निजामाबाधां मुक्त्वा ।

कोटीकोट्योंबुराशीनामेतासां विंशतिः स्थितिः ।
त्रिचत्वारिंशतोऽवाचि प्रकृतीनां परा बुधैः ॥ २१७ ॥
कर्म ४३ । आसां स्थितिः २० को. ।
नरवेदोऽरतिर्हास्यं सुस्वरं सन्नभोगतिः ।
सुरद्वन्द्वं स्थिरादेये शुभोच्चैः[1] सुभगं यशः ॥ २१८ ॥
संस्थानसंहती चाद्ये कोटीकोट्यो दश स्थितिः ।
समुद्राणां परैतासां प्रकृतीनां निवेदिताः ॥ २१९ ॥
कर्म १५ । आसां स्थितिः १० को. ।
द्वित्र्यक्षचतुरक्षेषु सूक्ष्मापर्याप्तयोः स्थितिः ।
साधारणे जिनैः कोटीकोट्योऽष्टादश भाषिताः ॥ २२० ॥
कर्म ६ । स्थितिरासां १८ को. ।
स्थितिः संस्थानसंहत्योः कोटीकोट्यो द्वितीययोः ।
अब्धीनां द्वादशप्राज्ञैश्चतुर्दश तृतीययोः ॥ २२१ ॥
कर्म २ । १२ को. । कर्म २ । १४ को. ।
तुर्ययोः षोडशाब्धीनां तयोः पंचमयोरिमाः ।
कोटीकोट्यः पटीयोभिरष्टादश निवेदिताः ॥ २२२ ॥
कर्म २ । १६ को. । कर्म २ । १८ को. ।

जघन्याऽऽबाधा कथ्यते—

सुदृश्याहारकद्वन्द्वतीर्थकृत्कर्मसु[2] त्रिषु ।
अन्तर्मुहूर्त्तमाबाधाऽन्तःकोटीकोट्यथ स्थितिः ॥ २२३ ॥
कर्म ३ ।

१ उच्चगोत्रं । २ सम्यग्दृष्टौ, आहारकद्वयतीर्थकृरेषु अन्तःकोटीकोटी-स्थितिः ।

मुहूर्त्ता द्वादश प्रोक्ता वेद्येष्टौ नामगोत्रयोः ।
स्थितिरन्तर्मुहूर्त्तोऽस्ति जघन्यान्येषु कर्मसु ॥ २२४ ॥
ज्ञानरोधान्तरायाणां दशानां दृक्चतुष्टये ।
अन्त्ये संज्वलने लोभे स्थितिरन्तर्मुहूर्त्तका ॥ २२५ ॥
अष्टोच्चयशसोः साते मुहूर्त्ताःद्वादशोदिताः ।
क्रोधे मासद्वयं माने मासोऽर्द्धं निकृतौ मतम् ॥ २२६ ॥

अत्र संज्वलने क्रोधे मासौ २ । माने मासः १ । निकृतौ ( मायायाम् ) पक्षः ।

नृतिर्यगायुषोरन्तर्मुहूर्त्ता [1]शेषयोः स्थितिः ।
दशवर्षसहस्राणि पुंवेदे वत्सराष्टकम् ॥ २२७ ॥
असातसहिते पूर्वे दर्शना[2]वृतिपंचके ।
मिथ्यात्वेऽस्ति कषायाणामाद्ये द्वादशके स्थितिः ॥ २२८ ॥
नोकषायाष्टकेंऽभोधेस्त्रिकसप्तचतुर्द्वयाः ।
सप्त भागाः क्रमात्पल्याऽसंख्यभागविवर्जिताः ॥२२९॥ युग्मम्

तदित्थम्—

| | | | |
|---|---|---|---|
| $\frac{३}{७}$ | $\frac{७}{७}$ | $\frac{४}{७}$ | $\frac{२}{७}$ |
| क ६ | १ | १२ | ८ |
| अ १ निद्रा ५ | मि १ | क. | नो. ८ |

मर्त्यतिर्यग्गतिद्वन्द्वे आतपो जातिपंचकम् ।
षट्के संस्थानसंहत्योरुद्योतो द्वे वियद्गती ॥ २३० ॥

१ देवनारकयोः । २ निद्रादिपंचके ।

वर्णाद्यगुरुलघ्वादिचतुष्के कर्मतेजसी ।
नव त्रसादि[1]युग्मानि नीचमौदारिकद्वयम् ॥ २३१ ॥
निर्माणमयशःकीर्त्तिर्जघन्याऽऽसां स्थितिर्मता ।
द्वौ पल्यासंख्यभागोनौ सप्तभागौ पयोनिधेः ॥ २३२ ॥
कर्म ५८ स्थितिः[2] २/७
[3]पयोनिधिसहस्रस्य सप्तभागौ स्थितिः स्मृता ।
द्वौ वैक्रियिकषट्कस्य पल्यासंख्यांशवर्जितौ ॥ २३३ ॥

२०००/७

अपूर्वक्षपके तीर्थकरत्वाहारयुग्मयोः ।
जघन्यास्थितिर्बंधोऽतःकोटीकोटी सरस्वताम् ॥ २३४ ॥
सर्वत्रान्तर्मुहूर्त्तवर्त्तिनी जघन्याबाधा ॥

उत्कृष्टानुत्कृष्टजघन्याजघन्यसाद्यनादिध्रुवाध्रुवस्वामित्वलक्षणाः नवबंधाः [5]तत्र—

स्थितिबंधश्चतुर्भेदः सप्तानामजघन्यकः ।
साद्यध्रुवास्त्रयोऽन्ये स्युश्चत्वारोऽप्यायुषो द्विधा ॥ २३५ ॥
इति मूलप्रकृतिषु बंधमुक्त्वोत्तरास्वाह—
दृक्चतुष्टयसंज्वालज्ञानरोधान्तरायकाः ।
अष्टादश [4]चतुर्द्धासां प्रकृतीनामजघन्यकः ॥ २३६ ॥

---

१ त्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तिस्थिरादेययशःकीर्त्तिसेतराणि ।
२, सागरस्यैकस्य सप्त भागाः क्रियते, तादृशौ पल्यासंख्यभागहीनौ ।
३ सागरस्यैकस्य सप्त भागास्तादृशा द्विसहस्रभागास्तर्हि कियंतो लभ्यंते २००० एषु ७ इत्येषां भागे दत्ते लब्धं २८५ ५/७ वैक्रियिकषट्कस्य । ४ नवसु ।
५ द्व्याधिकशतप्रकृतीनां उत्कृष्टादयश्चत्वारः कालाः साद्यध्रुवाः स्थितिबंधा भवंति ।

१८ ।

आसामष्टादशानां ते शेषाःसाद्यध्रुवास्त्रयः । १५ ।
संत्युत्कृष्टादयोऽन्यासां चत्वारः सादयो ध्रुवाः । १०२ ।
शुभाशुभेषु सर्वेषु समस्ताः स्थितयोऽशुभाः ।
तिर्यङ्नरसुरायूंषि संति सन्त्यष्टकर्मसु ॥ २३८ ॥
बध्यन्ते स्थितयः सर्वाः कषायवशतो यतः ।
तिर्यङ्मर्त्यामरायूंषि तत्प्रायोग्यविशुद्धितः ॥ २३९ ॥
अप्रशस्तास्ततः सर्वाः कर्मणां स्थितयो मताः ।
आयुषां त्रितयं मुक्त्वा तिर्यगादिभवां बुधैः ॥ २४० ॥
उत्कृष्टा स्थितिरुत्कर्षे संक्लेशस्य जघन्यका ।
विशुद्धेरन्यथा ज्ञेया तिर्यङ्नरसुरायुषाम् ॥ २४१ ॥
विशुद्धिः सातबंधस्य योग्या परिणतिर्मता ।
संक्लेशोऽसातबंधस्य योग्या साऽत्र मनीषिभिः ॥ २४२ ॥
संक्लेशवृद्धितो यस्माद्वर्द्धन्ते स्थितयोऽखिलाः ।
विशुद्धिवृद्धितस्तस्माद्धीयंते ता निसर्गतः ॥ २४३ ॥

तत्रोत्कृष्टस्थितौ विशुद्धयः स्तोका भूत्वा तावद्वर्द्धन्ते

१ पूर्वोक्तानां ते शेषा उत्कृष्टानुत्कृष्टजघन्यास्त्रयः कालाः साद्यध्रुवाः स्थितिबंधा भवंति । २ पापसम्बन्धिन्यः । ३ योगविशुद्धित्वात् । ४ तिर्यङ्नरसुरायुषां स्थितिरुत्कृष्टा कस्यापि जीवस्य पतिता भवति पश्चात्स जीवः संक्लेशवान् भवति, संक्लेशस्योत्कर्षे सति सा स्थितिर्जघन्यिका भवति, कस्यापि जीवस्य तिर्यङ्नरसुरायुषां जघन्यस्थितिः पतिता पश्चात्स जीवो विशुद्धिमान् तदा विशुद्ध्युत्कर्षे सति सा जघन्या स्थितिरन्यथोत्कृष्टा भवतीति ज्ञेयम् ।

यावज्जघन्यस्थितिहेतवः, जघन्यास्थितौ संक्लेशाः स्तोका भूत्वा तावत्क्रमेण वर्द्धन्ते यावदुत्कृष्टस्थितिहेतवः ॥

समिथ्यात्वेन बध्यन्ते प्रकृष्टाः स्थितयोऽखिलाः ।
मुक्त्वाऽऽहारकदेवायुस्तीर्थकर्तृत्वकर्मणाम् ॥ २४४ ॥
निर्व्रतस्तीर्थकर्तृत्वे प्रमत्तस्त्रिदशायुषि ।
करोत्याहारके[1] बंधमप्रमत्तः परास्थितेः ॥ २४५ ॥
श्वभ्रतिर्यङ्नरायूंषि षट्कं वैक्रियिकाद्वयम् ।
विकलत्रितयं सूक्ष्मं साधारणमपूर्णकम् ॥ २४६ ॥
नृतिर्यंचः[2] स्थितिं पंचदशानां कुर्वते पराम् । १५ ।
आतपस्थावरैकाक्षेष्वीशानांताः[3] सुरास्त्रिषु । ३ ॥ २४७ ॥
तिर्यग्द्वयमसंप्राप्तमुद्योतौदारिकद्वये ।
नारकात्रिदशाः षण्णामुत्कृष्टां कुर्वते स्थितिम् ॥ ६ । २४८ ॥
चतुर्गतिगता जीवाः शेषाणां कर्मणां स्थितिम् ।
मध्यमोत्कृष्टसंक्लेशाः प्रकृष्टां कुर्वते स्फुटम् ॥ ९२ । २४९ ॥

जघन्यस्थितिस्वामित्वं कथ्यते—

आहारकद्वये पूर्वस्तीर्थकृत्त्वे च संयतः । ३ ।
अनिवृत्तिस्तु पुंवेदे संज्वालानां चतुष्टये ॥ ५ । २५० ॥
दशके ज्ञानविघ्नस्थे प्रथमे दृक्चतुष्टये ।
जघन्यां कुरुते सूक्ष्मस्तां[4] सातोच्चयशःस्वपि ॥ १७ । २५१ ॥

---

१ अप्रमत्तमुनिराहारके बंधं करोति । २ मनुष्यातिर्यञ्चः पंचदशानामुत्कृष्टां स्थितिं कुर्वते । ३ आतपादिषु त्रिषु कर्मसु भवनवास्यादीशानांता देवा उत्कृष्टां स्थितिं कुर्वते नान्ये । ४ दशमगुणस्थानधारी जीवः सप्तदशसु जघन्यां स्थितिं कुरुते ।

असंज्ञीविक्रिया षट्के जघन्यां कुरुते स्थितिं ।
चतुर्णामायुषामेनां यथास्वं संज्ञ्य[1]संज्ञिनौ ॥ २५२ ॥
दशानामासाम्पुनर्विशेषमाह—
पूर्णः पंचेन्द्रियोऽसंज्ञीश्वभ्ररीतिद्वये स्थितिं ।
तद्योग्यप्राप्तसंक्लेशो विदधाति जघन्यिकाम् ॥ २५३ ॥
सुररीतिद्वयेऽप्येष जघन्यां कुरुते स्थितिं ।
वहमानः परां शुद्धिं योग्यां वैक्रियिकद्वये ॥ २५४ ॥
सम्प्राप्तशुद्धिसंक्लेशौ पंचाक्षौ संज्ञ्यसंज्ञिनौ ।
जघन्यां कुरुते पूर्णौ श्वभ्रदेवायुषोः स्थितिम् ॥ २५५ ॥
कुर्वते नरतिर्यंचो योग्यसंक्लेशभागिनः ।
नृतिर्यगायुषोरेनामभोगा[2]वनिजाः स्थितिं ॥ २५६ ॥
एकाक्षो बादरः पूर्णः प्राप्तसर्वविशुद्धिकः ।
प्रकृतीनाम्परा[3]सान्तु जघन्यां कुरुते स्थितिम् ॥ २५७ ॥
नारकाः विबुधाः जीवाः भोगविश्वंभराभवाः ।
भोगभूप्रतिबद्धा ये ते षड्मासायुषिस्थितिं ॥ २५८ ॥
यथास्वं कुर्वते योग्यशुद्धिसंक्लेशभागिनः ।
त्रिभागेष्वायुषः शेषेस्थितेः सति परे पुनः ॥ २५९ ॥ युग्मम्
भोगभूप्रतिभागोऽसौ यदंतरमुदाहृतम् ।
मानुषोत्तरशैलस्य स्वयंप्रभनगस्य च ॥ २६० ॥

इति स्थितिबन्धः समाप्तः ।

---

१ संज्ञीपर्याप्तः संप्राप्तशुद्धिः नरकायुष स्थितिं जघन्यां कुरुते असंज्ञीपंचेन्द्रियः पर्याप्तः संप्राप्तसंक्लेशो देवायुषो जघन्यां स्थितिं कुरुते । २ कर्मभूमिजाः । ३ अन्यासां पंचाशीतिप्रकृतीनाम् ।

कर्मणां रसविशेषोऽनुभागस्तस्यभेदानाह—
अष्टभिरुत्कृष्टाद्यैः सहानुभागे चतुर्दश ज्ञेयाः ।
शस्ताशस्तौ संज्ञा स्वामित्व प्रत्ययविपाकाः ॥ २६१ ॥
घातीनामजघन्यो वेद्ये नामनिभवन्त्यनुत्कृष्टः ।
अजघन्यानुत्कृष्टौ गोत्रे सर्वे चतुर्द्धा ते ॥ २६२ ॥
चतुर्भेदाः भवन्त्येते साद्यनादिध्रुवाध्रुवाः ।
परे साद्यध्रुवाः बंधाः जायन्तेपूर्वकर्मणां ॥ २६३ ॥
चत्वारोप्यायुषो द्वेधा बुधैः साद्यध्रुवाः मताः ।
अनुभागो भवत्येवं मूलप्रकृतिगोचरः ॥ २६४ ॥
कार्मणागुरुलघ्वाह्वे शस्तं वर्णचतुष्टयं ।
तैजसं निर्मिदष्टानामनुत्कृष्टश्चतुर्विधः ॥ २६५ ॥
शेषाःसाद्यध्रुवास्तासामनुत्कृष्टोज्झितास्त्रयः ।
बंधध्वंसिभिरष्टानामनुभागाः निवेदिताः ॥ २६६ ॥
दशज्ञानांतरायस्थाःदृग्रोधे नव षोडश ।
कोपादयो जुगुप्साभीः निंद्यवर्णचतुष्टयम् ॥ २६७ ॥
मिथ्यात्वमुपघातश्च त्रिचत्वारिंशतः स्मृताः ।
अजघन्यश्चतुर्भेदः परे साद्यध्रुवास्त्रयः ॥ २६८ ॥ युग्मम् ॥
उत्कृष्टाद्याः समस्तानाम्प्रकृतीनामुदाहृताः ।
चत्वारोऽपि द्विधान्यासां साद्यध्रुवविकल्पतः ॥ २६९ ॥
स्वमुखेनैवपच्यन्ते मूलप्रकृतयोऽखिलाः ।
उत्तरास्तुल्यजातीयाः पुनरन्यमुखेन च ॥ २७० ॥
आयुर्दर्शनचारित्रमोहप्रकृतयः परं ।
स्वमुखेनैवपच्यंते सर्वदैवोत्तरास्वपि ॥ २७१ ॥

---

१ । ७३ प्रकृतीनाम् ।

उदीयते मनुष्यायुर्नरकायुर्मुखेन नो ।
चारित्रमोहनं जातु दृष्टिमोहमुखेननो ॥ २७२ ॥
अनुभागः प्रकृष्टोऽस्ति प्रशस्तानाम् विशुद्धितः ।
संक्लेशतोऽप्रशस्तानां जघन्यः पुनरन्यथा ॥ २७३ ॥
द्वाचत्वारिंशतस्तीव्रः प्रशस्तानां विशुद्धितः ।
संक्लेशतोऽप्रशस्तानां द्वाशीतेर्वामदृष्टिषु ॥ २७४ ॥
त्रीण्यायूंषि शरीराणि पंच त्रसचतुष्टयम् ।
अंगोपागत्रयं निर्मिदाद्ये संस्थानसंहती ॥ २७५ ॥
परघातागुरुलघ्वाह्वे सुरद्वयनरद्वये ।
सुभगोच्चस्थिरोच्छ्वासाः सन्नभोरीतिसुस्वरे ॥ २७६ ॥
पंचेन्द्रियं शुभादेये शस्तं वर्णचतुष्टयं ।
तीर्थकृत्त्वातपोद्योताः यशःसाते शुभाःस्मृताः ॥ २७७ ॥
॥ विशेषकम् ॥

प्रशस्तास्वातपोद्योततैरश्चमनुजायुषाम् ।
तीव्रोमिथ्यादृशि ज्ञेयः शेषाणाम् शुद्धदर्शने ॥ २७८ ॥
मानुषौदौरिकद्वंद्वे जीवौ संहतिमादिमाम् ।
प्रकृष्टीकुरुतः पंच सदृष्टी सुरनारकौ ॥ २७९ ॥
द्वाचत्वारिंशतस्तस्या देवायुरप्रमत्तकः ।
तीव्रां द्वात्रिंशतं शेषां कुर्वते क्षपकाःपरं ॥ २८० ॥
४+५+१+३२=मिश्रिताः ४२ ॥
दशज्ञानांतरायस्थाःदर्शनावरणे नव ।
नीचं षड्विंशतिं मोहे निद्यं वर्णचतुष्टयं ॥ २८१ ॥
श्वभ्रतिर्यग्द्वये पंच संस्थानान्यशोऽशुभं ।
नारकायुरनादेयमसातं विकलत्रिकम् ॥ २८२ ॥

पंचसंहतयः सूक्ष्मं दुःस्वरासन्नभोगती ।
साधारणमपर्याप्तं दुर्भगं स्थावरास्थिरे ॥ २८३ ॥
एकाक्षमुपघातं च द्व्शीतिर्वामदृष्टिना ।
प्रकृतीनामप्रशस्तानां प्रकृष्टीक्रियतेऽगिना ॥ २८४ ॥ कलापकम्
श्वभ्रतिर्यङ्नरायूंषि श्वभ्रद्वयमपूर्णकम् ।
विकलत्रितयं सूक्ष्मं साधारणकमित्यमूः ॥ २८५ ॥
एकादशनृतिर्यञ्चः प्रकृतीरप्रशस्तकाः ।
मिथ्यात्ववासितस्वांतास्तीव्रीकुर्वंतिजन्तवः ॥ २८६ ॥ युग्मम् ॥
देवो वामदृगुत्कृष्टानेकाक्षांस्थावरातपान् ।
उद्योतं कुरुते श्वाभ्रः सप्तमीभूमिमाश्रितः ॥ २८७ ॥
तिर्यग्द्वयमनादेयं प्रकृतीनामिदं त्रयं ।
प्रकृष्टीकुरुतो देवौ कुदृष्टी देवनारकौ ॥ २८८ ॥
प्रकृतीनामष्टषष्टिं चतुर्गतिगताःपरं ।
उत्कृष्टीकुर्वंते तीव्रकषायाःवामदृष्टयः ॥ २८९ ॥
तिर्यगायुर्मनुष्यायुरातपोद्योतलक्षणम् ।
प्रशस्तासु पुरादत्तं प्रकृतीनां चतुष्टयम् ॥ २९० ॥
तीव्रानुभागबंधासु मध्ये यद्यपि तत्त्वतः ।
संभवापेक्षयाभूयो मिथ्यादृष्टेः प्रदीयते ॥ २९१ ॥
अप्रशस्तं तथाप्येतत्केवलंव्यपनीयते ।
षडशीतेरपनीते द्व्शीतेर्जायते पुनः ॥ २९२ ॥
८६ अपनयने ८२ ॥
दशज्ञानांतरायस्थाःदृगावृतिचतुष्टयम् ।
मंदत्वं नयते सूक्ष्मः समयेंत्ये चतुर्दश ॥ २९३ ॥

पंच पुंवेदसंज्वालाः प्रकृतीरनिवृत्तिकः ।
रतिं हास्यं जुगुप्साभीर्निद्यं वर्णचतुष्टयं ॥ २९४ ॥
नयते प्रचलितानिद्रे उपघातमपूर्वकः ।
मंदानुभागबंधत्वमेकादशाविशुद्धधीः ॥ २९५ ॥
आहारकद्वयं शश्वदप्रमत्तेन साधुना ।
शोकारती प्रमत्तेन मंदत्वं नीयते पुनः ॥ २९६ ॥
मिथ्यात्वमादिकोपादि चतुष्कं स्त्यानगृद्धयः ।
तिस्रश्चाष्टेतिनीयन्ते मंदत्वंवामदृष्टिना ॥ २९७ ॥
असंयतो द्वितीयानां कषायाणाम् चतुष्टयं ।
देशव्रतस्तृतीयानाम् मंदत्वं नयते पुनः ॥ २९८ ॥
इत्येताःप्रकृतीरेते संयमाभिमुखास्त्रयः ।
मन्दानुभागबन्धत्वं नयन्ते षोडशक्रमात् ॥ २९९ ॥
आयुश्चतुष्टयं सूक्ष्मं षट्कं वैक्रियिकाद्वयं ।
साधारणमपर्याप्तं त्रयं विकलगोचरम् ॥ ३०० ॥
मिथ्यादृशोनृतिर्यञ्चो मंदीकुर्वेति षोडश ।
उद्योतौदारिकद्वंद्वे तिस्रास्त्रिदशनारकाः ॥ ३०१ ॥
तिर्यग्द्वितयनीचानां तिसृणां कुर्वतेऽगिनः ।
मंदानुभागबंधत्वं सप्तमीमवनीङ्गताः ॥ ३०२ ॥
मंदे स्थावरैकाक्षे द्वे तिर्यग्देवमानवाः ।
कुर्वते मध्यमे भावे वर्तमानाः शरीरिणः ॥ ३०३ ॥
एकं सौधर्मदेवान्ता आतपं वामदृष्टयः ।
मनुष्यास्तीर्थकर्तृत्वं मंदीकुर्वन्त्यसंयताः ॥ ३०४ ॥
उच्छ्वासागुरुलघ्वाह्वे निर्मित्त्रसचतुष्टयं ।
पंचाक्षं कार्मणं तेजश्चारुवर्णचतुष्टयम् ॥ ३०५ ॥

परघातं च संक्लिष्टाश्चतुर्गतिनिवासिनः ।
मंदाः पंचदशाप्येताः कुर्वते वामदृष्टयः ॥ ३०६ ॥
मिथ्यात्वाकुलितास्तीव्रविशुद्धिगतमानसाः ।
आरोपयन्ति मंदत्वं स्त्रीनपुंसकवेदयोः ॥ ३०७ ॥
वेद्यद्वयं स्थिरद्वंद्वं शुभद्वंद्वं शुभद्वयम् ।
मनुष्यद्वयमादेयद्वयं हि सुभगद्वयं ॥ ३०८ ॥
विहायोगमनद्वंद्वं विंशतिं त्रिभिरान्विताम् ।
प्रपन्नाः मध्यमं भावं मन्दीकुर्वन्ति दुर्दृशः ॥ ३०९ ॥
संज्ञाः कथ्यन्ते—
भवन्ति सर्वघातिन्यः कषायाः द्वादशादिमाः ।
आद्याः दृग्रोधने पंच प्रान्ते ज्ञानेक्षणावृती ॥ ३१० ॥
मिथ्यात्वं विंशतिर्बंधे सम्यग्मिथ्यात्वसंयुताः ।
उदये ताः पुनर्दक्षैरेकविंशतिरीरिताः ॥ ३११ ॥
बंधे २० । उदये २१ ॥
दर्शनावरणे तिस्रः चतस्रो ज्ञानरोधने ।
संज्वालाः नोकषायाश्च मोहने विघ्नपंचकं ॥ ३१२ ॥
जायन्ते देशघातिन्यो बंधने पंचविंशतिः ।
षड्विंशतिर्भवन्त्येताः सम्यक्त्वेन सहोदये ॥ ३१३ ॥
बंधे २५ । उदये २६ । पिंडिताः ४७ ॥
वेद्यायुर्नामगोत्राणां प्रोक्ताःप्रकृतयोऽखिलाः ।
अघातिन्योऽखिलाः प्राज्ञैरेकोत्तरशतप्रमाः ॥ ३१४ ॥
अघातिन्यः १०१ ॥ पिंडिताः १४८ ॥
घातिकाभिरिमा युक्ता घातिका सन्त्यघातिका ।
घातिकास्तत्रपापाख्याः पुण्यपापाभिधाः पराः ॥ ३१५ ॥

संज्वालाः ज्ञानरुध्याद्याश्चतस्रो विघ्नपंचकं ।
तिस्रो दृग्रुधि पुंवेदः संति सप्तदशेति याः ॥ ३१६ ॥
चतुर्विधेन भावेन सदा परिणमंति ताः ।
त्रिविधेन पुनः शेषाः सप्तोत्तरशतप्रमाः ॥ ३१७ ॥
लतादार्वस्थिपाषाणतुल्यास्ता भावतो मताः ।
अन्याःदार्वस्थिपाषाणतुल्याःसप्तोत्तरंशतम् ॥ ३१८ ॥
प्रशस्तानां समाःभावाः गुडखंडसितामृतैः ।
अन्यासां निंबकंजीरविषहालाहलैर्मताः ॥ ३१९ ॥
योगेन बध्यते सातं मिथ्यात्वेनात्रषोडश ।
असंयमेन पंचाग्रा त्रिंशदन्याःकषायतः ॥ ३२० ॥
वृत्तं आहारकद्वंद्वे सम्यक्त्वं तीर्थकारिणि ।
प्रधानप्रत्ययास्तासामितिबन्धो न तैर्विना ॥ ३२१ ॥
इति प्रधानप्रत्ययनिर्देशः । अपरेप्येवमाहुः—
मिथ्यात्वस्योदये यांति षोडश प्रथमेगुणे ।
संयोजनोदये बंधं सासने पंचविंशतिः ॥ ३२२ ॥
कषायाणां द्वितीयानामुदये निर्व्रते दश ।
स्वीक्रियन्ते तृतीयानां चतस्रो देशसंयते ॥ ३२३ ॥
सयोगे योगतः सातं शेषाःस्वे स्वे गुणे पुनः ।
विमुच्याहारकद्वंद्वतीर्थकृत्वे कषायतः ।
षष्ठिः पंचाधिका बंधं प्रकृतीनाम् प्रपद्यते ॥ ३२४ ॥

---

१ सोलसपणवीसणभं दसचउछक्केक्कबंधवोच्छिण्णा ।
दुगतीस चदुरपुव्वे पण सोलस जोगिणो एक्को ॥

आहारकद्वयस्योक्तः संयमस्तीर्थकारिणः ।
सम्यक्त्वं कारणं पूर्वं बंधने बंधवेदिभिः ॥ ३२५ ॥

मिथ्यात्वं षोडशानामिह प्रधानं कारणमन्येषामप्रधानम् इत्यादिज्ञेयं ॥

शरीरपंचकं वर्णपंचकं रसपंचकं ।
षट्के संस्थानसंहत्योरष्टकं स्पर्शगोचरं ॥ ३२६ ॥
अंगोपांगत्रयं गंधद्वयं प्रत्येकयुग्मकं ।
निर्माणागुरुलघ्वाह्वे स्थिरद्वंद्वं शुभद्वयम् ॥ ३२७ ॥
परघातोपघाताह्वे देहबंधनपंचकं ।
आतपोद्योतसंघातपंचकानीति भाषिताः ॥ ३२८ ॥
द्वाभ्यां पुद्गलपाकिन्यः षष्ठि प्रकृतयो युताः ।
एतदीयेन पाकेन शरीराद्युपलब्धितः ॥ ३२९ ॥
ज्ञानदृग्रोधविघ्नस्थाः वेद्यमोहनगोत्रजाः ।
गतयो जातयस्तीर्थकृदुच्छ्वासो नभोगती ॥ ३३० ॥
त्रससुस्वरपर्याप्तस्थूलादेययशःशुभाः ।
सेतरा जीवपाकाः स्युरष्टाग्रा सप्ततिः पुनः ॥ ३३१ ॥
ज्ञानरोधादयः सर्वाः यतो जीवं विकुर्वतो ।
जीवपाकास्ततोज्ञेयास्तत्र तत्पाकदृष्टितः ॥ ३३२ ॥

अत्रात्मनि निबद्धाः सप्तविंशति नामप्रकृतयः तासां तत्रविपाकोपलब्धेः ।

आनुपूर्व्यश्चतस्रोऽपि क्षेत्रपाका निवेदिताः ।
जिनैरायूंषि चत्वारि भवपाकानि सर्वदा ॥ ३३३ ॥

इत्युनुभागबंधः समाप्तः ॥

स्वामित्वभागभागाभ्यामष्टोत्कृष्टादयः सह ।
दश प्रदेशबन्धस्य प्रकाराः कथिताः जिनैः ॥ ३३४ ॥
पुद्गलाः ये प्रगृह्यन्ते जीवेन परिणामतः ।
रसादित्वमिवाहाराः कर्मत्वं यांति तेऽखिलाः ॥ ३३५ ॥
एकक्षेत्रावगाढ़ास्ते योग्याः सर्वप्रदेशगाः ।
गृह्यन्ते हेतुतो जीवैः सादयोऽनादयः सदा ॥ ३३६ ॥
गंधवर्णरसैः सर्वैः स्पर्शैश्चतुर्भिरन्वितैः ।
विमुक्तानंतभागोस्ति[1] कर्मानंतप्रदेशकं ॥ ३३७ ॥
एकैकत्रक्षणे येऽत्र बंधमायान्ति पुद्गलाः ।
अष्टधा बध्नतः कर्म तेषाम्भागप्रकल्पना ॥ ३३८ ॥
शीतोष्णस्निग्धरूक्षत्वकलिताः परमाणवः ।
योग्यत्वं प्रतिपद्यन्ते कर्मबंधस्य नापरे ॥ ३३९ ॥
एकेन परिणामेन गृहीताः परमाणवः ।
अष्टकर्मत्वमायांति शुद्धिसंल्केशवृद्धितः ॥ ३४० ॥
वृद्धिर्यथायथाक्षाणां विवर्द्धेते तथा तथा ।
जंतोर्विशुद्धिसंक्लेशौ हीयेते परथा पुनः ॥ ३४१ ॥
स्वल्पस्तत्रायुषस्तुल्यो गोत्रनाम्नोस्ततोऽधिकः ।
विघ्नदृग्ज्ञानरोधेषु समोभागस्ततोऽधिकः ॥ ३४२ ॥
समस्तो परमो भागो मोहनीये निवेदितः ।
वेदनीयेऽधिकस्तस्मादितीत्थं भागकल्पना ॥ ३४३ ॥
सुखदुःखे यतोऽनल्पे दत्तोभागस्ततोऽधिकः ।
वेदनीये परेषान्तु भूयेवस्थाव्यपेक्षया ॥ ३४४ ॥

---

१ सिद्धानंतिमभागः

आवल्यसंख्यभागेन खंडिते कर्मसंचये ।
आधिक्यमेकखंडेन कर्तव्यं सर्वकर्मसु ॥ ३४५ ॥
अनुत्कृष्टो मतः षण्णां चतुर्भेदस्त्रयः परे ।
बंधाः साद्यध्रुवाः सर्वे मोहनीयायुषो द्विधा ॥ ३४६ ॥
दर्शनावरणे षट्कं स्त्यानगृद्धित्रिकं बिना ।
दश ज्ञानान्तरायस्थाः कषायाः द्वादशान्तिमाः ॥ ३४७ ॥
जुगुप्साभयमित्यासां प्रकृतीनां चतुर्विधः ।
अनुत्कृष्टस्त्रयः शेषाः बन्धाः साद्यध्रुवाः द्विधा ॥ ३४८ ॥
उत्कृष्टाद्याः द्विधा बंधाश्चत्वारः सादयोऽध्रुवाः ।
प्रकृतीनाम् प्रदेशाख्याः शेषाणां नवतेः पुनः ॥ ३४९ ॥
जघन्योनाधरो यस्मादजघन्योऽस्ति साधरः ।
उत्कृष्टो नोत्तरो यस्मादनुत्कृष्टोऽस्ति सोत्तराः ॥ ३५० ॥
उत्कृष्टो जायते बंधः षट्सु मिश्रं विनायुषः ।
प्रदेशाख्यो गुणस्थाननवके मोहकर्मणः ॥ ३५१ ॥
अनायुर्मोहनीयानाम् षण्णाम्भवति कर्मणाम् ।
अपर्याप्तस्य सूक्ष्मस्य निगोतस्य शरीरिणः ॥ ३५२ ॥
क्षुद्रभवग्रहस्योक्तं त्रिभागे परमायुषः ।
बंधनं कर्मणाम्प्राज्ञैरन्येषाम्प्रथमे क्षणे ॥ ३५३ ॥
दृग्ज्ञानरोधविघ्नानां चतस्रः पंचपंच च ।
सातमुच्चंयशः सप्त दशानां विदधाति वै ॥ ३५४ ॥
प्रदेशबंधमुत्कृष्टं सूक्ष्मलोभगुणस्थितः ।
संज्वालनरवेदानां पंचानामनिवृत्तिकः ॥ ३५५ ॥
तीर्थकृत्प्रचलानिद्राषट्कं हास्यादिगोचरं ।
नवानां कुरुते बंधमुत्कृष्टं शुभदर्शनः ॥ ३५६ ॥

चतुष्कस्य द्वितीयस्य कषायाणामसंयतः
विदधाति तृतीयस्य प्रकृष्टं देशसंयतः ॥ ३५७ ॥
सुरद्वितयमादेयं सुभगं नृसुरायुषी ।
आद्ये संहत्तिसंस्थाने सुस्वरः सन्नभोगतिः ॥ ३५८ ॥
असातं विक्रियाद्वंद्वामित्येताः यास्त्रयोदश ।
तासां सद्दृष्टिदुर्दृष्टी बंधोत्कृष्टत्वकारिणौ ॥ ३५९ ॥
आहारकद्वयस्योक्तः प्रदशोत्कर्षणक्षमः ।
अप्रमत्तः, परासान्तु जीवो मिथ्यात्वदूषितः ॥ ३६० ॥
उत्कृष्टयोगवान् संज्ञी पूर्णांगी स्तोकबंधकः ।
प्रकृष्टं कुरुते बंधं जघन्यं विपरीतकः ॥ ३६१ ॥
चतस्रः श्वभ्रदेवायुःश्वभ्राद्वितयलक्षणाः ।
असंज्ञी कुरुते स्वल्पा मध्ययोगव्यवस्थितः ॥ ३६२ ॥
आहारकद्वयं साधुः प्रमादरहिताशयः ।
पंच निःसंयमः तीर्थकृद्देवस्य चतुष्टयं ॥ ३६३ ॥
शेषाः सूक्ष्मनिगोतोंऽगी स्वल्पत्वं नयते पुनः ।
मध्ययोगास्थितः सर्वा नवाधिकशतप्रमाः ॥ ३६४ ॥
प्रदेशप्रकृती बन्धौ योगतः स्तः कषायतः ।
जन्तोः स्थित्यनुभागौ स्तः तद्व्यपाये व्यपायतः ॥ ३६५ ॥
स्वभावः प्रकृतिर्ज्ञेया स्वभावादच्युतिः स्थितिः ।
अनुभागो रसस्तासां प्रदेशोंऽशावधारणम् ॥ ३६६ ॥
प्रकृतिस्तिक्तता निंबे स्थितिरच्यवनं पुनः ।
रसस्तस्यानुभागः स्यादित्येवं कर्मणामपि ॥ ३६७ ॥
कालं क्षेत्रं भवं द्रव्यमुदयः प्राप्य कर्मणाम् ।
जायमानो मतो द्वेधा विपाकेतरभेदतः ॥ ३६८ ॥

भागोऽसंख्यातिमः श्रेणेर्योगस्थानानि देहिनः ॥
ततोऽसंख्यगुणो ज्ञेयः सर्वप्रकृतिसंग्रहः ॥ ३६९ ॥
ततोऽसंख्यगुणानि स्युः स्थितिस्थानान्यतः स्थितेः ।
स्थानान्यध्यवसायानामसंख्यातगुणानि वै ॥ ३७० ॥
असंख्यातगुणान्यस्माद्रसस्थानानि कर्मणाम् ।
ततोऽनंतगुणाः संति प्रदेशाः कर्मगोचराः ॥ ३७१ ॥
अविभागपरिच्छेदाः सर्वेषामपि कर्मणाम् ।
एकैकत्र रसस्थाने ततोऽनंतगुणाः मताः ॥ ३७२ ॥

उपजातिवृत्तम् ।

कर्मप्रवादांबुधिविन्दुकल्प—
श्चतुर्विधो बंधविधिः स्वशक्त्या ।
संक्षेपतो यः कथितो मयाऽसौ ।
विस्तीरणीयो महनीयबोधैः ॥ ३७३ ॥

बंधविचारं बहुतमभेदं यो हृदि धत्ते विगलितखेदम् ।
याति स भव्यो व्यपगतकष्टां सिद्धिमबंधोऽमितगतिरिष्टाम्
गुणस्थानविशेषेषु प्रकृतीनां नियोजने ।
स्वामित्वमिह सर्वत्र स्वयमेव विबुध्यताम् ॥ ३७५ ॥

इति श्रीमदमितगत्याचार्यवर्यप्रणीते पंचसंग्रहाख्यग्रंथे
शतकं समाप्तम् ।

---

नत्वाहमर्हतो भक्त्या घातिकल्मषघातिनः ।
स्वशक्त्या सप्ततिं वक्ष्ये बंधभेदावबुद्धये ॥ ३७६ ॥
बंधोदयसत्त्वानां सिद्धपदैर्दृष्टिवादपाथोधेः ।
स्थानानि प्रकृतीनामुद्धृत्य समासतो वक्ष्ये ॥ ३७७ ॥

वंधे कत्युदये सत्त्वे संति स्थानानि वा कति ।
मूलोत्तरगताः सन्ति कियंत्यो भंगकल्पनाः ॥ ३७८ ॥
अष्टकं सप्तकं षष्ठं बंधेऽष्टोदयसत्त्वयोः ।
एकबंधे त्रयो भेदा एको बंधविवर्जिते ॥ ३७९ ॥

| | | | |
|---|---|---|---|
| बंध | ८ | ७ | ६ |
| उदय | ८ | ८ | ८ |
| सत्ता | ८ | ८ | ८ |

एकबंधे—

| | | | |
|---|---|---|---|
| बंध | १ | १ | १ |
| उदय | ७ | ७ | ४ |
| सत्ता | ८ | ७ | ४ |

अबंधे—

| | |
|---|---|
| बं. | ० |
| उ. | ४ |
| स. | ४ |

त्रयोदशसु सप्ताष्टौ बंधेऽष्टोदयसत्त्वयोः ।
भेदाः संज्ञिनि पर्याप्ते पंच द्वौ केवलिद्वये ॥ ३८० ॥

त्रयोदशसु जीवसमासेषु—

| | | |
|---|---|---|
| बं. | ७ | ८ |
| उ. | ८ | ८ |
| स. | ८ | ८ |

एकस्मिन् संज्ञिनि पूर्णे—

| | | | | |
|---|---|---|---|---|
| ८ | ७ | ६ | १ | १ |
| ८ | ८ | ८ | ७ | ७ |
| ८ | ८ | ८ | ८ | ७ |

केवलिद्वये,—१, ० । ४, ४ । ४, ४ ।

द्वौ विकल्पौ गुणस्थानषट्के मिश्रं विनाष्टसु ।
एकैकः कर्मणां बंधः पाकसत्वेषु जायते ॥ ३८१ ॥

मिथ्यादृष्ट्यादीनां षण्णां मिश्रवर्जितानां द्वौ विकल्पौ—
८, ७ । ८, ८ । ८, ८ ।

एकैकोऽष्टानां—

| मिश्र | अपू. | अ. | सू. | उ. | क्षी. | स. | अ. |
|---|---|---|---|---|---|---|---|
| ७ | ७ | ७ | ६ | १ | १ | १ | ० |
| ८ | ८ | ८ | ८ | ७ | ७ | ४ | ४ |
| ८ | ८ | ८ | ८ | ८ | ७ | ४ | ४ |

---

बंधोदयास्तिता मूलप्रकृतीनां निवेदिताः ।
उत्तरप्रकृतीनां ताः कथयिष्यामि साम्प्रतम् ॥ ३८२ ॥
बंधादित्रितये पंच विघ्ने ज्ञानावरोधने ।
शांते क्षीणे च निर्बन्धे पंचानामुदयास्तिते ॥ ३८३ ॥

दशसु,—५, ५ । ५, ५ । ५, ५ । शान्तक्षीणयोः—०, ० । ५, ५ । ५, ५ ।

नव स्युः षट् चतस्रश्च दृग्रोधे बंधसत्त्वयोः ।
स्थानानि त्रीणि पाके द्वे चतस्रः संति पंच वा ॥ ३८४ ॥

भवंति नव सर्वाः षट् स्त्यानगृद्धित्रयं विना ।
चतस्रः प्रचलानिद्रारहिताः बंधसत्त्वयोः ॥ ३८५ ॥

९ । ६ । ४

चतस्रोऽत्रोदये चक्षुर्दर्शनावरणादयः ।
जायंते पंच वा निद्रादीनामेकतरोदये ॥ ३८६ ॥

४ । ५ ।

बंधत्रये संति नवात्र सत्त्वे
षट्कं चतुर्बन्धिनि बंधहीने ।
नवाथ षट् द्वौ सकलेषु पाकौ
सत्वे च पाके च चतुष्कमंत्ये ॥ ३८७ ॥

द्वयोर्नव द्वयोः षट्कं चतुर्षु च चतुष्टयम् ।
पंच पंचसु शून्यानि भंगाः संति त्रयोदश ॥ ३८८ ॥

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| बंध | ९ | ९ | ६ | ६ | ४ | ४ | ४ | ४ | ० | ० | ० | ० | ० |
| उदय | ४ | ५ | ४ | ५ | ४ | ५ | ४ | ५ | ४ | ५ | ४ | ५ | ४ |
| सत्ता | ९ | ९ | ९ | ९ | ९ | ९ | ६ | ६ | ९ | ९ | ६ | ६ | ४ |

बंधत्रये ९ । ६ । ४ सर्वे मूलभंगाः १३ ।

सत्तायां नवकंषट्के द्वयेषट्कं नव द्वये ।
द्वितये षट्कमेकत्र गतबंधे चतुष्टयम् ॥ ३८९ ॥

इति मूलभंगेषु सत्त्वभंगाः । उदयभंगाश्चत्वारः पंच वा सर्वत्र ।

द्वितये नवकं षट्कं ततोऽपूर्वस्य पूर्वकम् ।
यावद्भागं ततः सूक्ष्मं बंधे यावच्चतुष्टयम् ॥ ३९० ॥
गुणस्थानेषु बंधः—९।९।६।६।६।६।६।६।४।४।०।०।०।० ।
सत्वे नवोपशांतांताः क्षीणे षट् प्रथमे क्षणे ।
चतस्रोऽत्रांतिमे ज्ञेयाः सत्त्वं नास्ति ततः परम् ॥ ३९१ ॥
क्षपके संत्यपूर्वस्य नव प्रकृतयः स्फुटम् ।
अनिवृत्तेरसंख्येयभागेषु षडतः परम् ॥ ३९२ ॥

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ६ | ४ | ० | ० |
| | | | | | | | ९ | ९।६ | ६ | | क्षी.प्र. | क्षी.अं. | | |
| | | | | | | | क्ष | | | | | | | |

सर्वत्र चत्वारः पंच चोदये परं क्षीणस्यांत्यक्षणे चतुष्टयमिति ।

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ |

मिथ्यादृष्टिसासनयोः—बंधः ९, ९ । उदयः ४, ५ । सत्ता ९, ९ । सम्यङ्मिथ्यादृष्ट्यादिषु द्विविधापूर्वकरणप्रथमसप्तमभागं यावत्—बं. ६, ६ । उ. ४, ५ । स. ९, ९ । शेषापूर्वानिवृत्तिसूक्ष्मोपशमकेषु, क्षपकेषु चापूर्वकरणस्य सप्तभागेषु षट्स्वनिवृत्यसंख्यातान् बहून् भागान् यावत्—बं. ४, ४ । उ. ४, ५ । स. ९, ९ । ततः परं क्षपितषोडशप्रकृतेरनिवृत्तेः शेषसंख्यातभागे सूक्ष्मक्षपके च—

बं. ४, ४ । उ. ४, ५ । स. ६, ६ । उपशांते—बं. ०, ० । उ. ४, ५ । स. ९, ९ । क्षीणे प्रथमे क्षणे—बं. ०, ० । उ. ४, ५ । स. ६, ६ । क्षीणांत्यक्षणे—बं. ० । उ. ४ । स. ४ ।

सप्त गोत्रेऽष्ट वेद्ये स्युर्भंगाः पंच नवोदिताः ।
नव पंचक्रमाच्छ्वभ्रातिर्यङ्नरसुरायुषाम् ॥ ३९३ ॥

गोत्रे ७ । वेद्ये ८ । आयुषि ५ । ९ । ९ । ५ ।

उच्चं द्वयोर्द्वयोर्नीचं बंधे पाके चतुष्टये ।
उच्चनीचोच्चनीचानि द्वयं सत्त्वे चतुष्टये ॥ ३९४ ॥
पंचमे सकलं नीचमित्थं वेद्येऽपि बुध्यताम् ।
एकोऽङ्कः प्रथमेऽन्यत्र शून्यस्तत्र निवेश्यते ॥ ३९५ ॥

| | | | | | |
|---|---|---|---|---|---|
| बंध | १ | १ | ० | ० | ० |
| उदय | १ | ० | १ | ० | ० |
| सत्ता | १।० | १।० | १।० | १।० | ०।० |

अत्रांकसंदृष्टेरुच्चे एको नीचे शून्यः १।० एकः साते शून्योऽसाते १।० ।

आद्ये पंचादिमाः भंगाश्चत्वारः स्त्रस्तदर्शने ।
द्वावाद्यौ त्रितयेऽन्यत्र पंचमेऽस्त्येक आदिमः ॥ ३९६ ॥

मिथ्यादृष्ट्यादिषु दशसु पंचानां विभागः ५ । ४ । २ । २ ।
२ । १ । १ । १ । १ । १ ।

उच्चं पाके द्वयं सत्त्वे चतुष्के बंधवर्जिते ।
अयोगस्योच्चमंत्येऽस्ति समये पाकसत्त्वयोः ॥ ३९७ ॥

चतुर्षु उ. १ । स. १।० । अयोगांत्यक्षणे १ । १ । एवं सप्त ७ ।

चत्वारो गोत्रवद्भंगाः वेद्यस्य प्रथमा मताः ।
आद्येषुषट्सु ते संति प्रथमौ द्वौ च सप्तसु ॥ ३९८ ॥
आद्यौ बंधपरित्यक्तावयोगे द्वावुपान्तिमे ।
द्वावसाते तथा साते तस्यान्ते पाकसत्त्वयोः ॥ ३९९ ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| बं. | १ | १ | ० | ० | | | | |
| उ. | १ | ० | १ | ० | १ | ० | ० | १ |
| स. | १० | १० | १० | १० | १० | १० | ० | १ |

एवमष्ट ८ ।

श्वभ्रायुरुदितं सच्च तिर्यगायुरबध्नतः ।
बध्नतस्तत्र जायेते बध्यमानोदिते सती ॥ ४०० ॥
सती बद्धोदिते बद्धे मर्त्यायुष्यप्ययं क्रमः ।
एकद्वित्रिचतुर्भिश्च संज्ञांकैरायुषां क्रमात् ॥ ४०१ ॥
चतुर्णामायुषां संदृष्टिः १ । [2]२ । ३ । ४ ।
पाके श्वभ्रायुषोऽबंधे, बंधे तिर्यङ्नरायुषोः ।
सत्वे श्वभ्रयुषो भंगास्तदाद्योः परयोरपि ॥ ४०२ ॥

श्वभ्रायुषो भंगाः—

| | | | | | | |
|---|---|---|---|---|---|---|
| श्वभ्रायुषो भंगाः | ५ | ० | २(ति.) | ० | ३(म.) | ० |
| | | १ | १ | १ | १ | १ |
| | | १ | १।२ | १।२ | १।३ | १।३ |
| | | | न. ति. | न.ति. | न. म. | न.म. |

तिर्यग्भवायुरुदयेऽबंधे, बंधे पुनश्चतुष्कस्य ।
तिर्यग्जीवितसत्त्वे सत्त्वे वा परचतुष्कस्य ॥ ४०३ ॥

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| तिर्यगायुर्भंगाः | ९ | ० | १ | ० | २ | ० | ३ | ० | ४ | ० |
| | | २ | २ | २ | २ | २ | २ | २ | २ | २ |
| | | २ | २।१ | २।१ | २।२ | २।२ | २।३ | २।३ | २।४ | २।४ |

मानवभवायुरुदयेऽबंधे, बंधे पुनश्चतुष्कस्य ।
मानुषजीवितसत्त्वे सत्त्वे चापरचतुष्कस्य ॥ ४०४ ॥

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| मनुष्यायुर्भंगाः | ९ | ० | १ | ० | २ | ० | ३ | ० | ४ | ० |
| | | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ |
| | | ३ | ३।१ | ३।१ | ३।२ | ३।२ | ३।३ | ३।३ | ३।४ | ३।४ |

---

१ तिर्यगायुरबध्नतो जीवस्य श्वभ्रायुरुदयं सत्ताच । तिर्यगायुर्बध्नतो नारकजीवस्य तिर्यगायुर्बंधः नरकायुरुदयः द्वयोः सत्ता ।

२ ( १ ) अंकेन नरकायुर्बोध्यम् ( २ ) अंकेन तिर्यगायुः ( ३ ) अंकेन मनुष्यायुः ( ४ ) अंकेन देवायुः

पाके देवायुषो बंधे बंधे तिर्यङ्नरायुषोः ।
सत्वे देवायुषो भंगास्तदाद्योः परयोरपि ॥ ४०५ ॥

देवायुर्भंगा—

| | | | | | |
|---|---|---|---|---|---|
| ५ | ० | २ | ० | ३ | ० |
| | ४ | ४ | ४ | ४ | ४ |
| | ४ | ४।२ | ४।२ | ४।३ | ४।३ |

द्व्येकाग्रे विंशती ते त्रिसप्तन्यूने मनीषिणः ।
नव पंच च चत्वारि त्रीणि द्वे विदुरेककम् ॥ ४०६ ॥
यानीति मोहनीयस्य स्थानानि दश कर्मणः ।
बंधे संति गुणस्थाने तेषामस्तीति योजना ॥ ४०७ ॥
२२।२१।१७।१३।९।५।४।३।२।१।
मिथ्यात्वयुजि मिथ्यात्वं कषायाः षोडशैककः ।
वेदो हास्यादिकेस्वेकं युग्मं भययुगुप्सने ॥ ४०८ ॥
द्वाविंशतिरमिथ्यात्वषंढका स्त्रस्तदर्शने ।
न्यूनानंतानुबंधिस्त्रीवेदैर्मिश्रचतुर्थयोः ॥ ४०९ ॥
१।१६।१।२।१।१। मिळिताः २२ । इति ।

मिथ्यादृष्टौ प्रस्तारः—२ । २, २ । १, १, १ । १६ । १ ।
सासने २१ । प्रस्तारः—२ । २, २ । १, १ । १६ । मिश्रा-
व्रतयोः १७ । प्रस्तारः,—२ । २,२ । १ । १२ ।
अप्रत्याख्यानकैरूना देशे षष्ठे तृतीयकैः ।
सप्तमाष्टमयोरेते शोकारतिं विना कृताः ॥ ४१० ॥

देशे १३ । प्रस्तारः—२ । २,२ । १ । ८ । षष्ठे ९ ।
प्रस्तारः,—२ । २,२ । १ । ४ । सप्तमाष्टमयोः ९ । प्रस्तारः—
२ । २ । १ । ४ ।

बंधे पुंवेदसंज्वालाः संज्वाला नवमे क्रमात् ।
एकद्वित्रिभिरूनास्ते मोहने क्रमतो बुधैः ॥ ४११ ॥
नवमे ५ । ४ । ३ । २ । १ ।
भंगाः षडादिमे[1] बंधे चत्वारस्ते[2] द्वितीयके ।
द्वौ[3] द्वौ त्रिषु परेषु स्यादेकैको मोहकर्मणः ॥ ४१२ ॥
६।४।२।२।२।१।१।१।१।१।
उदयस्थानानि कथ्यन्ते—
नव स्थानानि मोहस्य क्रमाद्दश दशोदये ।
एकद्वित्रिचतुः पंचषडष्टनववर्जिताः ॥ ४१३ ॥
१०।९।८।७।६।५।४।२।१।
मिथ्यात्वमेकमेकं च कषायाणां चतुष्टयम् ।
वेद एकतमो युग्मं हास्यादिष्वेककं भयम् ॥ ४१४ ॥
जुगुप्सेत्युदये सन्ति दश प्रकृतयः स्फुटम् ।
मिथ्यादृष्टिगुणस्थाने द्वाविंशतिनिबंधने ॥ ४१५ ॥ युग्मम् ॥

तत्र मिथ्यात्वं १ । अनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनेषु चत्वारः क्रोधमानमायालोभाः ४ । त्रिषु वेदेष्वेकतमो वेदः १ । हास्यरत्यरतिशोकयोरेकतरं युग्मं २ । भयं १ । जुगुप्सा १ । दशोदयस्थानमिदं द्वाविंशतिबंधस्थानानि मिथ्यादृष्टौ १० ।

मिथ्यात्वमाद्याः क्रमतो द्वितीया—
स्त्याज्यास्तृतीया भयजुगुप्सनैकम्[4] (?) ।

---

१ मिथ्यात्वे २२ स्थाने षट् भंगाः वेदत्रयहास्यादियुग्मद्वयगुणनेन । २ वेदद्वयहास्यादियुग्मद्वयगुणनेन ३ हास्यादियुग्मद्वयेन । ४ अत्रैकाक्षराधिक्येन छन्दोभङ्गः ।

तद्युग्महास्यादियुगे सवेदे
स्थाने परत्रोदययोजनाय ॥ १६ ॥

अस्यार्थः—दशोदयस्थानतो मिथ्यात्वत्यागे नवोदयस्थानमेकविंशतिबंधके सासने ९। ततः कषायाणामादिचतुष्कत्यागे परचतुष्कत्रयैकतरत्रयग्रहे एकतरवेदादिपंचकग्रहे चाष्टोदयस्थानं, सप्तदशबंधकस्य सम्यङ्मिथ्यादृष्टेरसंयतस्यौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेश्च ८ । ततो द्वितीयचतुष्कत्यागे परचतुष्कद्वयान्यतरद्वयग्रहे एकतरवेदादिपंचकग्रहे च सप्तोदयस्थानं, त्रयोदयबंधकस्य संयतासंयतस्यौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेश्च ७। ततस्तृतीयचतुष्कत्यागे चतुर्णां संज्वलनानामेकतरग्रहे एकतरवेदादिपंचकग्रहे च षडुदयस्थानं नवकबंधकानामौपशमिकक्षायिकसम्यग्दृष्टीनां प्रमत्ताप्रमत्तापूर्वाणां ६। ततो भयजुगुप्सयोरेकतरत्यागे पंचोदयस्थानं प्रमत्तादीनामेव ५ । ततो भयजुगुप्साद्वयत्यागे चतुरुदयस्थानं प्रमत्तादीनामेव ४ ॥ एषामुदयस्थानानां दशादीनाम् कषाय चतुष्कवेदत्रययुग्मद्वयानां परस्पराभ्यासे चतुर्विंशतिभंगाः २४ । ततो हास्यादित्यागे च चतुर्णां सञ्ज्वलनानामेकरतरग्रहे त्रयाणां च वेदानामेकतरग्रहे सवेदस्यानिवृत्तेर्द्विकमुदयस्थानं २। अस्य द्वादश भंगाः १२ । चतुर्बंधकस्यानिवृत्तेरुदयस्थाने द्वावेकश्च तत्राद्ये द्वादशभंगाः। द्वितीये निर्वेदस्यानिवृत्तेश्चतुर्णां संज्वलनानामेकतरेणैकमुदयस्थानं १ । अस्य चत्वारो भंगाः ४ । त्रयबंधकस्य क्रोधवर्ज्यानां संज्वलनानामेकतरेणैकमुदयस्थानं १ । अस्य त्रयो भंगाः ३ । द्वयबंधकस्य क्रोधमानवर्ज्ययोः संज्वलनयोरेकतरेणैकमुदयस्थानं १ । अस्य द्वौ

भंगौ २ । एकबंधकस्य लोभसंज्वलनेनैकमुदयस्थानं १ अस्यैको भंगः १ । अबंधकस्यसूक्ष्मलोभस्य लोभसंज्वलनेनैकमुदयस्थानं १ अस्याप्येको भंगः ।

पंचदश सत्तास्थानानि कथ्यन्ते—

क्रमाद्द्वित्रिचतुःषट्कसप्ताष्टनववर्जितम् ।
सप्तकं त्रिंशतां कृत्वा त्रिद्व्येकसहितान् दश ॥ ४१७ ॥
एकद्वित्रिचतुःपंचहीनान् षण्मोहकर्मणः ।
सत्त्वे पंचदश प्राहुः स्थानानीति मनीषिणः ॥ ४१८ ॥

२८।२७।२६।२४।२३।२२।२१।१३।१२।११।५।४।३।२।१।

मोहेऽष्टाविंशतिः सर्वाः सम्यक्त्वे सप्तविंशतिः ।
क्रमात्षड्विंशतिर्मिश्रे भवत्युद्वेलिते सति ॥ ४१९ ॥

२८ । २७ । २६ ।

अष्टाविंशतितः क्षीणे कषायाणां चतुष्टये ।
प्रथमेऽसति मिथ्यात्वे मिश्रसम्यक्त्वयोः क्रमात् ॥ ४२० ॥
कोपादिकाष्टके षंढे स्त्रियां हास्यादिगोचरे ।
षट्के पुंसि क्रमान्नष्टे संज्वालानां त्रये सति ॥ ४२१ ॥

२४।२३।२२।२१।१३।१२।११।५।४।३।२।१।

सत्त्वस्थानानि शेषाणि ज्ञेयानीति यथागमम् ।
उदस्थानयोगोऽतो बंधस्थानेषु कथ्यते ॥ ४२२ ॥
पंचस्वाद्येषु बंधेषु पंचपाका दशादिकाः ।
द्वौ परे द्विकमेको वा परेऽन्येष्येकको मतः ॥ ४२३ ॥

| | | | | | |
|---|---|---|---|---|---|
| बं | २२ | २१ | १७ | १३ | ९ |
| उ | १० | ९ | ८ | ७ | ६ |

अनिवृत्तौ—

| | | | | | |
|---|---|---|---|---|---|
| ब | ५ | ४ | ३ | २ | १ |
| उ | २ | २ | १ | १ | १ |

सूक्ष्मे—

| |
|---|
| ० |
| १ |

आद्ये संयोजनोनोऽन्यो द्वौ ( च ) सप्तदशे परौ ।
पाकौ समिश्रसम्यक्त्वो ससम्यक्त्वौ द्वयोः परौ ॥४२४ ॥

| २२ | | २१ | १७ | १३ | ९ |
|---|---|---|---|---|---|
| १० | ९ | ९ | ९।८ | ८।७ | ७।६ |

भिया जुगुप्सया हीना द्वितयेन दशाप्यमी ।
उपर्युपरि त्रयो भंगाः एकैकत्र ततो मताः ॥ ४२५ ॥

| २२ | | २१ | १७ | | १३ | | ९ | |
|---|---|---|---|---|---|---|---|---|
| ८ | ७ | ७ | वे | उ. क्षा. | वे | उ. क्षा | वे | उ. क्षा. |
| ९।९ | ८ | ८।८ | ७ | ६ | ६ | ५ | ५ | ४ |
| १० | ९।९ | ९ | ८।८ | ७।७ | ७।७ | ६।६ | ६।६ | ५।५ |
| | १० | | ९ | ८ | ८ | ७ | ७ | ६ |

अत्रैको दशानामुदयः षट्, नवानामेकादशाष्टानां दश, सप्तानां सप्त, षण्णां चत्वारः पंचानामेकश्चतुर्णां द्वावनिवृत्तौ द्वयोः पंचानामेकैकभेदाः पाकाः ज्ञेयाः । तत्र पंचसु स्थानेषु १।६।११।१०।७।४।१। पिंडिताः ४० । अनिवृत्तौ २।४। सूक्ष्मे १ ।

तत्र द्वाविंशतेर्बंधे सप्ताद्या दशैकविंशतेर्नव सप्ताद्याः, सप्तदशानां नव षडाद्या स्त्रयोदशानामष्ट पंचाद्याः नवानां सप्त चतुराद्याः पाकाः द्रष्टव्याः १४० ।

कषायवेदयुग्मानां भंगाघाते परस्परम् ।
चतुर्विंशतिरादिष्टा बंधस्थानेषु पंचसु ॥ २४ । ४२६ ॥

चतुर्विंशत्या चत्वारिंशतस्ताडने संत्युदयभेदाः ९६० ।

भंगा वै द्वादश प्रोक्ताः वेदैः कोपादिताडने ।
आद्ययोर्बंधयोर्दक्षैर्द्वितयस्योदये सति ॥ ४२७ ॥

एकपाके चतुर्बंधे ज्ञेयं भंगचतुष्टयम् ।
त्रिद्वयेकबंधने भंगास्त्रिद्वयेकेऽन्यत्र चैकक: ॥ ४२८ ॥

| | | | | | |
|---|---|---|---|---|---|
| ५ | ४ | ४ | ३ | २ | १ |
| २ | २ | १ | १ | १ | १ |
| १२ | १२ | ४ | ३ | २ | १ |

सूक्ष्मे ०,१,१ । सर्वे भंगा मिलिताः ३५ । पूर्वैः सहिताः ९९० ।

पाकप्रकृतिभिर्हत्वा पाकस्थानानि ताडयेत् ।
चतुर्विंशतिभंगाद्यैः पदबंधोपलब्धये ॥ ४२९ ॥

दशादीनि चतुरंतानि पाकस्थानानि

| | | | | | | |
|---|---|---|---|---|---|---|
| १० | ९ | ८ | ७ | ६ | ५ | ४ |
| १ | ६ | ११ | १० | ७ | ४ | १ |

दशादिपाकप्रकृतिताडितानि—१०।५४।८८।७०।४२।२०।४ पिंडितानि २८८ । चतुर्विंशतिभंगताडितानि ६९१२ । अनिवृत्तौ पूर्वोक्ता द्विकादिपाकप्रकृतयः २।२।१।१।१।१। सूक्ष्मे १ । एभिर्भंगैरेताः १२।१२।४।३।२।१।१। गुणिता एतावंतः—२४।२४।४।३।२।१।१। पिंडिता ५९ । पूर्वैः सह पदबंधा एतावंतः ६९७१ ।

मोहप्रकृतिसंख्यायाः पदबंधा भवंत्यमी ।
एकोनत्रिंशता हीनाः सहस्राः सप्त निश्चितम् ॥ ४३० ॥

---

बंधस्थानं प्रति सत्तास्थानानि दीयंते—

आद्ये त्रीण्येकमन्यत्र त्रिषु पंच षडेकक: ।
सप्तापरत्र चत्वारि सत्तास्थानान्यतः परे ॥ ४३१ ॥

मोहस्य सत्तास्थानानि बंधस्थानेषु सामान्येनाह—

| बं. | २२ | २१ | १७ | १३ | ९ | ५ | ४ | ३ | २ | १ | ० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| स. | ३ | २ | ५ | ५ | ५ | ६ | ७ | ४ | ४ | ४ | ४ |

तानि विशेषेणाह—

आद्यमाद्ये त्रयं बंधे द्वितीये चाष्टविंशतिः ।
त्रिषु विंशतिरुक्ताष्टचतुस्त्रिद्व्येकसंयुता ॥ ४३२ ॥

पंचबंधके—

एषाष्टचतुरेकाग्रा त्रिद्व्येकाग्राः मताः दश ।
पंचाग्राणि परे तानि चत्वार्येव ततः परम् ॥ ४३३ ॥
प्रत्येकं विंशतिर्युक्ता तत्राष्टचतुरेककैः ।
बंधकाबंधकेष्वग्रे चतुस्त्रिद्व्येकका: परे ॥ ४३४ ॥

द्वाविंशति बंधके सत्तास्थानानि २८।२७।२६। एकविंशति-बंधके २८ । सप्तदशत्रयोदशनवबंधकेषु २८।२४।२३।२२।२१ पंचबंधके २८।२४।२१।१३।१२।११। चतुर्बंधके २८।२४।२१ १३।१२।११।५। त्रिबंधके २८।२४।२१।४। द्विबंधके २८।२४। २१।३। एकबंधके २८।२४।२१।२। अबंधके २८।२४।२१।१।

नामकर्म कथ्यते—

दश स्थानानि बंधेऽत्र मोहनीये नवोदये ।
सत्त्वे पंचदशाख्याय कथ्यन्ते नामकर्माणि ॥ ४३५ ॥
त्रिकपंचषडष्टाग्रा नवकाग्रा दशाधिका ।
एकादशाधिका ज्ञेया विंशतिर्नाम्नि चैककम् ॥ ४३६ ॥

नामानि बंधस्थानान्याह—२३।२५।२६।२८।२९।३०।३१।१।

एकं पंच त्रयं पंच श्वभ्रातिर्यङ्नृनाकिनाम् ।
क्रमतो गतियुक्तानि बंधस्थानानि नामनि ॥ ४३७ ॥
१ । ५ । ३ । ५ ।

हुंडं श्वभ्रद्वयं निर्मित्कार्मणं सुभगास्थिरे ।
अयशोऽसन्नभोरीतिस्तैजसं दुःस्वराशुभे ॥ ४३८ ॥
त्रसाद्यगुरुलघ्वादिवर्णादीनां चतुष्टयम् ।
पंचेन्द्रियमनादेयं द्वयं वैक्रियिकाह्वयम् ॥ ४३९ ॥
इत्यष्टाविंशतिस्थानमेकं मिथ्यात्ववासिताः ।
सश्वभ्रगतिपंचाक्षपूर्णं बध्नंति जन्तवः ॥ ४४० ॥
२८। स्थानं १। भंगाः ११। नरकगत्या सह वृत्तिविरोधादेका-
क्षविकलाक्षजातिसंहननानि नात्र बध्यन्ते ।
एकत्रिंशद्वियुक्तैकद्विकपंचषडष्टकैः ।
पंच स्थानानि जायंते तिर्यग्गत्यामिति स्फुटम् ॥ ४४१ ॥
३०।२९।२६।२५।२३।
एकं संस्थानषट्कस्य षट्कस्यैकं च संहतेः ।
षण्णां स्थिरादियुग्मानामेकैकं कर्म तैजसम् ॥ ४४२ ॥
नभोगतियुगस्यैकं निर्मिदौदारिकद्वयम् ।
वर्णाद्यगुरुलघ्वादित्रसादीनां चतुष्टयम् ॥ ४४३ ॥
तिर्यग्द्वितयमुद्योतं पंचाक्षं त्रिंशदादिमा ।
पर्याप्तोद्योतपंचाक्ष तिर्यग्गतिसमन्विता ॥ ४४४ ॥
मिथ्यादृष्टिभिरेषात्र बध्यते सासनैरपि ।
द्वितीय त्रिंशदेषैव व्यन्त्यसंस्थानसंहतिः ॥ ४४५ ॥

तत्र प्रथमत्रिंशति संस्थानषट्कसंहननषट्कनभोरीतियुग्मस्थि-
रादियुग्मषट्कानां ६।६।२।२।२।२।२।२।२। परस्पराभ्यासे भंगाः
४६०८ पुनरुक्तत्वान्न गृह्यन्ते ।

हुंडमौदारिकद्वन्द्वं तेजोऽसंप्राप्तदुर्भगे ।
त्रसाद्यगुरुलघ्वादिवर्णादीनां चतुष्टयम् ॥ ४४६ ॥

यशः स्थिरशुभद्वन्द्वत्रितयैकतरत्रयम् ।
निर्मिद्विकलजात्येकमुद्योतासन्नभोगती ॥ ४४७ ॥
तिर्यग्द्वयमनादेयं कार्मणं दुःस्वरं त्विमाम् ।
तृतीयां त्रिंशतिं मिथ्यादृष्टिर्बध्नाति दुष्टधीः ॥ ४४८ ॥
विकलेन्द्रियपर्याप्ततिर्यग्गतिभिरान्विताम् ।
अत्रान्योन्याहतैर्भंगा जातित्रययुगत्रयैः ॥ ४४९ ॥
संस्थानं विकलाक्षाणां हुंडं भवति सर्वदा ।
जातिस्वभावतस्तेषां दुःस्वरं बंधपाकयोः ॥ ४५० ॥
३ । २ । २ । २ । भंगाः २४ ।
यथेति त्रिंशतिस्तिस्र एकोनत्रिंशतस्तथा ।
परं भेदोऽयमेतासु यदुद्योतो न बध्यते ॥ ४५१ ॥
४६०८ । २४ एते भंगाः राशौ न[1] गृह्यन्ते । सासनस्य ३२०० एते पूर्वोक्ता न गृह्यन्ते ।
पूर्वोक्तानादेये वर्णागुरुलघुचतुष्टयद्वितयम् ।
तिर्यग्द्वयमेकाक्षं तैजसमौदारिकं पूर्णम् ॥ ४५२ ॥
स्थिरशुभयशोयुगानामेकैकं दुर्भगाद्वयं स्थूलम् ।
स्थावरमुद्योतातपयोरेकं कार्मणं हुंडम् ॥ ४५३ ॥
निर्माणं षड्विंशतिरेतां बध्नाति वृद्धमिथ्यात्वः ।
पूर्णैकेन्द्रियतिर्यग्गतिबादरसंयुतां जीवः ॥ ४५४ ॥
एकेन्द्रियजीवानामष्टांगाभावतो यतो नास्ति ।
अंगोपांगं हुंडं संस्थानं जायते चैकम् ॥ ४५५ ॥

तस्मादातपोद्योतस्थिरास्थिरशुभाशुभयशोऽयशोयुगानां २।२।२।२। परस्पराभ्यासे भंगाः १६ । १

---

१ ‘ख’ पुस्तके “ न ” इत्यस्यपाठोनास्ति ।

उद्योतातपहीना षड्विंशतिमेकतरयुतां पूर्वाम् ।
प्रत्येकसूक्ष्मयुगयोः स्वीकुरुते पंचविंशतिं पूर्वः ॥ ४५६ ॥

मिथ्यादृष्टिर्भवनादीशानांताः सूक्ष्मं साधारणं न बध्नंति । अवरुध्यायशस्तस्मात्स्थिरयुग्मं ताड्यते शुभयुगेन । भंगाः ४।

स्थूलप्रत्येकस्थिरशुभयुग्मानां परस्पराभ्यासे ।
अयशःकीर्त्तिं श्रित्वा षोडश भंगाः प्रजायंते ॥ ४५७ ॥

चतुर्णां युगानां २ । २ । २ । २ । अन्योन्याभ्यासे भंगाः १६ । द्वये २० ।

अयशःकीर्त्युपघाते तेजोऽगुरुलघुहुंडास्थिरे त्रसापूर्णे ।
वर्णचतुष्कं स्थूलं निर्मितिर्तिर्यग्द्वयमनादेयम् ॥ ४५८ ॥
प्रत्येकमसंप्राप्तं दुर्भगमौदारिकद्वयं परं कर्म ।
विकलेन्द्रियपंचेद्रियजात्येकतरमशुभं ज्ञेयम् ॥ ४५९ ॥
साऽपूर्णत्रसतिर्यग्गातिमेतां पंचविंशतिं जीवः ।
बध्नाति वामदृष्टिर्भंगचतुष्टययुतामन्याम् ॥ ४६० ॥

यतोऽत्र परघातोच्छ्वासदुःस्वरविहायोगतीनामपर्याप्तेन सह बंधो नास्ति विरोधादपर्याप्तकाले तेषामुदयाभावाच्च । ततश्चत्वारो जातिभंगाः ४ ।

त्रयोविंशतिरेकाक्षं तिर्यग्द्वितयानिर्मिती ।
दुर्भगागुरुलघ्वाह्वे तेज औदारिके शुभम् ॥ ४६१ ॥
अयशःकीर्त्तिरेकैकं स्थूलप्रत्येकयुग्मयोः ।
उपघातमनादेयमपर्याप्तकदुर्भगे ॥ ४६२ ॥
वर्णचतुष्कं हुंडं स्थावरमथ कार्मणं समिथ्यात्वैः ।
तिर्यग्गत्येकाक्षाऽपूर्णयुता बध्यते दीनैः ॥ ४६३ ॥

अत्र संहननबंधो नास्ति एकेन्द्रियेषु संहननोदयाभावात्। अत्र वादरप्रत्येकयुग्मयोरन्योन्याभ्यासे चत्वारो भंगाः ४।

इति तिर्यग्गतिगताः सर्वे भंगाः ९३०८।

---

विंशतिर्दशाभिर्युक्ता नवभिः पंचभिः क्रमात्।
बंधस्थानानि जायंते नृगत्यां त्रीणि नामनि ॥ ४६४ ॥

३०।२९।२९।

त्रिंशदेषात्र पंचाक्षं नृद्वयौदारिकद्वये।
सुस्वरं सुभगादेये पूर्वे संस्थानसंहती ॥ ४६५ ॥
शुभस्थिरयशोयुग्मेष्वेकैकं सन्नभोगतिः।
वर्णाद्यगुरुलघ्वादित्रसादीनां चतुष्टयम् ॥ ४६६ ॥
तीर्थकृत्कार्मणं तेजो निर्मिद्बध्नात्यसंयतः।
एतां नृगतिपंचाक्षपूर्णतीर्थकरैर्युताम् ॥ ४६७ ॥

३०। अत्र दुर्भगदुःस्वरानादेयानां तीर्थकरसम्यक्त्वाभ्यां सह विरोधान्न बंधः सुभगसुस्वरादेयानामेव बंधो यतः, ततस्त्रयाणां युगानां २।२।२। परस्पराभ्यासे भंगाः ८।

मानवगत्यादियुतामेकोनत्रिंशतं निबध्नीतः।
हीनां त्रिंशतमेतां तीर्थकृता मिश्रसद्दृष्टी ॥ ४६८ ॥

२४। अत्राष्टौ भंगाः पुनरुक्तत्वान्न गृह्यन्ते ८।

संहतिसंस्थानानां षण्णामेकतरसंयुतामेताम्।
आदेयसुस्वरसुभगद्वंद्वानामेकतरयुक्ताम् ॥ ४६९ ॥
बध्नाति वामदृष्टिः षट्कद्वययुग्मषट्कोपेताम्।
सगगनगतियुग्मैकामेकोनात्रिंशतं जीवः ॥ ४७० ॥

अत्रैषां ६।६।२।२।२।२।२।२।२। परस्परबधे भंगाः ४६०८।

तृतीयामपि बध्नाति द्वितीयामिव सासनः ।
व्यन्त्यसंहतिसंस्थानां शेषैकतरसंयुताम् ॥ ४७१ ॥

५।५।२।२।२।२।२।२।२। परस्पराभ्यासे भंगाः ३२०० ।

एते पूर्वप्रविष्टत्वान्न गृह्यन्ते ।

पंचविंशतिरुद्दिष्टा कार्मणं मानुषद्वयम् ।
तेजो हुंडमसंप्राप्तं पंचाक्षौदारिकद्वये ॥ ४७२ ॥
अपूर्णागुरुलघ्वाद्वे स्थूलं प्रत्येकदुर्भगे ।
उपघातमनादेयं निर्माणमयशोऽशुभम् ॥ ४७३ ॥
त्रसमास्थिरकं वर्णचतुष्टयमिमामसौ ।
गृह्णात्यपूर्णपंचाक्षमनुष्यगतिसंयुताम् ॥ ४७४ ॥

अत्र संक्लेशतो बध्यमानेनापर्याप्तेन सह स्थिरादीनां विशुद्धिप्रकृतीनां बंधाभावादेको भंगः १। नृगतौ सर्वे भंगाः ४६१७

इति नृगतिगताः सर्वे भंगाः समाप्ताः ।

एकद्वित्रिचतुस्त्यागे क्रमात् द्वात्रिंशतः स्फुटम् ।
चत्वारि देवगत्यां स्युरेकं निर्गतिपंचकम् ॥ ४७५ ॥

३१ । ३० । २९ । २८ । १ ।

एकत्रिंशादियं तत्र कार्मणां त्रिदशद्वयम् ।
पंचाक्षमाद्यसंस्थानं तेजोवैक्रियिकद्वयम् ॥ ४७६ ॥
वर्णाद्यगुरुलघ्वादित्रसादीनां चतुष्टयम् ।
सुस्वरं सन्नभोरीतिः शुभमाहारकद्वयम् ॥ ४७७ ॥
सुभगं यश आदेयं निर्मित्तीर्थकरस्थिरे ।
बध्यते सप्तमापूर्वैः पूर्णपंचेन्द्रियान्विता ॥ ४७८ ॥
देवेत्याहारकद्वन्द्वतीर्थकारित्वसंयुता ।
संहतिर्बध्यते नात्र तस्या देवेष्वभावतः ॥ ४७९ ॥

भंगः १ ।

एकात्रिंशदियं त्रिंशदुक्ता तीर्थकरोचिता ।
बध्यते निःप्रमादेन साऽपूर्वकरणेन च ॥ ४८० ॥

अत्र यतोऽस्थिरादीनां बंधो नास्ति विशुद्धया सह बंधविरोधात् । ततो भंगौ २ ।

आहारकद्वयत्यागे मतैकत्रिंशतो बुधैः ।
एकोनत्रिंशदाद्यासौ बध्यते सप्तमाष्टमैः ॥ ४८१ ॥

अत्र भंगः पुनरुक्तः २ । एकोनत्रिंशदियं त्रिभिरव्रतपूर्वकैः समाचर्या[1], स्थिरशुभयशोयुगानामेकतरेणान्विताऽन्यास्ति । अत्र देवगत्या सहद्योतो न बध्यते तस्यां तस्योदयो नास्ति, तिर्यग्गतिं मुक्त्वाऽन्यगत्या सह तस्य बंधविरोधाच्च । देहदीप्तिस्तु देवानां वर्णनामकर्मोदयात् । अत्र त्रयाणां युगानां २ । २ । २ । परस्परबधे[2] भंगाः ८ ।

एकत्रिंशदपास्ते तीर्थकराहारकद्वन्द्वे ।
अष्टाविंशतिराद्या स्वीकार्या सप्तमाष्टमकैः ॥ ४८२ ॥
एकोनत्रिंशतोऽपास्ते तीर्थकृत्वे प्रबध्यते ।
अष्टाविंशतिरन्यासौ सर्वदा षड्भिरादिमैः ॥ ४८३ ॥

कुतो यतोऽप्रमादादीनामस्थिराशुभायशसां बंधो नास्ति भंगा ८ । सर्व देवेषु भंगाः १९ ।

अपूर्वाख्यानिवृत्त्याख्यसूक्ष्मलोभाह्वयास्त्रयः ।
एकं यशो निबध्नंति न परं नामकर्माणि ॥ ४८४ ॥
मिलितानामशेषाणां पंचपंचाशता विना ।
चतुर्दशसहस्राणि विकल्पाः संति नामनि ॥ ४८५ ॥

---

१ 'उपार्जनीया' इत्यपि पाठः । २ गुणने ।

१३९४५ ।

नाम्न उदयस्थानानि कथ्यन्ते—

अत्रैकविंशतेः पाके चतुर्विंशतिरिष्यते ।
सैकाद्वित्रिचतुः पंचषट्सप्ताग्रा नवाष्ट च ॥ ४८६ ॥

२१।२४।२५।२६।२७।२८।२९।३०।३१।९।८।

तत्रैकपंचसप्ताष्टनवाग्रा विंशतिः क्रमात् ।
पाकस्थानानि जायंते पंच श्वाभ्रगताविति ॥ ४८७ ॥

२१।२५।२७।२८।२९ ।

एकविंशतिमत्रेदं कार्मणं नारकद्वयम् ।
पर्याप्तागुरुलघ्वाह्वे तेजोवर्णचतुष्टयम् ॥ ४८८ ॥
पंचेन्द्रियमनादेयमयशो दुर्भगं त्रसम् ।
स्थूलं शुभास्थिरद्वन्द्वे निर्माणमिति भाषितम् ॥ ४८९ ॥
विग्रहर्त्तिमुपेतस्य नारकस्योदयस्य च ।
एको जघन्यतो ज्ञेयः समयौ द्वौ प्रकर्षतः ॥ ४९० ॥

२ । भंगः १ ।

त्यक्तश्वभ्रानुपूर्वीकं तद्युक्तं पांचविंशतम् ।
प्रत्येकांगोपघाताख्यहुंडवैक्रियिकद्वयैः ॥ ४९१ ॥
इदमात्तशरीरस्य ज्ञेयं श्वाभ्रस्य पूर्णताम् ।
यावच्छरीरपर्याप्तिर्गच्छंत्यतर्मुहूर्त्तिकी ॥ ४९२ ॥

२५ । भंगः १ ।

नास्त्यत्र संहतेः पाको देवनारकयोर्यतः ।
न तस्यां जायते बंधः कदाचन निसर्गतः ॥ ४९३ ॥
असद्गत्यन्यघाताभ्यां तद्युक्तं सप्तविंशतम् ।
पूर्णांगस्यानपर्याप्तिं यावत्कालोऽस्य जायते ॥ ४९४ ॥

२७ । भंगः १ ।

तदष्टविंशतं युक्ते स्यादुच्छ्वासेन पूर्णताम् ।
यावद्वचनपर्याप्तेः कालोऽस्यांतर्मुहूर्त्तकम् ॥ ४९५ ॥

२८ । भंगौ २ ।

एकोनत्रिंशतं युक्तं दुःस्वरेण तदिष्यते ।
एकैको जायते भंगः स्थानानामिति पंचके ॥ ४९६ ॥

२९ । भंगाः १ । सर्वे भंगाः ५ ।

दशवर्षसहस्राणि कालस्तस्य जघन्यकः ।
प्रकृष्टस्तु त्रयस्त्रिंशत्सागराः विनिवेदिताः ॥ ४९७ ॥

अन्तर्मुहूर्त्तोनं कालद्वयं ज्ञेयम् ।

इति श्वभ्रगतिः समाप्ता ।

एकविंशतिरुक्ता च चतुरादियुता च सा ।
एकत्रिंशत्पर्यन्तास्तिर्यग्गत्यां नवोदयाः ॥ ४९८ ॥

२१।२४।२५।२६।२७। ८।२९।३०।३१।

उद्योतस्योदयस्त्यक्त्वा तेजः पवनकायिकौ ।
स्थूलेष्वन्येषु सर्वेषु पूर्णेष्वस्ति त्रसेषु च ॥ ४९९ ॥

आतपस्योदयः पूर्णे वादरे क्षितिकायिके ।
सामान्यैकेन्द्रियस्योक्तं प्रथमं स्थानपंचकम् ॥ ५०० ॥

२१ । २४ । २५ । २६ । २७ ।

आतपोद्योतपाकेन सप्तविंशतिवर्जितम् ।
सामान्यैकेद्रिये ज्ञेयमाद्यंपाकचतुष्टयम् ॥ ५०१ ॥

२१ । २४ । २५ । २६ ।

इति पाकचतुष्टयम् ।

अस्त्येकविंशतं स्थानं निरुद्योतातपोदयम् ।
कार्मणागुरुलघ्वाह्वे तिर्यग्द्वितयतैजसे ॥ ५०२ ॥

वर्णगन्धरसस्पर्शा निर्मितिस्थिरशुभद्वये ।
स्थूलपूर्णयशोयुग्मत्रितयैकतरत्रयम् ॥ ५०३ ॥
एकेन्द्रियमनादेयं स्थावरं दुर्भगं परम् ।
विग्रहर्त्ताविदं स्थानमेकद्वित्रिक्षणस्थिति ॥ २१ । ५०४ ॥
सूक्ष्मसाधारणापूर्णैः सार्धं नोदेति यद्यशः ।
एकोऽतोऽस्ति यशः पाके भंगोऽन्यत्र चतुष्टयम् ॥ ५०५ ॥

अत्रायशःपाके वादरपर्याप्तयुग्मयोरन्योन्याभ्यासे भंगाः ४ । यशःपाके भंगः १ । मिलिता भंगाः ५ ।

अतिर्यगानुपूर्वीकं चातुर्विंशतमस्त्यदः ।
स्थानमौदारिके हुंडे प्रत्येकयुगलैकके ॥ ५०६ ॥
उपघाते च निक्षिप्ते गृहीतांगस्य पूर्णता ।
यावच्छरीरपर्याप्तेरत्र भंगाः नवेरिताः ॥ २४ । ५०७ ॥

अत्रायशःपाके स्थूलपर्याप्तप्रत्येकयुग्मानामन्योन्याभ्यासे भंगाः ८ । यशःपाके भंगः १ । यतो यशःपाकेन सार्धं सूक्ष्मापर्याप्तसाधारणानामुदयो नास्ति । सर्वे भंगाः ९ ।

सान्यघातमपूर्णोनमस्तीदं पांचविंशतम् ।
यावदुच्छ्वासपर्याप्तिस्तावत्कालोऽस्य भाषितः ॥ २५ । ५०८ ॥
भंगाः परस्पराभ्यासे स्थूलप्रत्येकयुग्मयोः ।
चत्वारोऽत्रायशःपाके परत्रैकोऽभिधीयते ॥ ५०९ ॥

अयशःपाके ४ । यशः पाके १ । मिलिताः ५ ।

सोच्छ्वासमानपर्याप्ताविदं षाड्विंशतं मतम् ।
अस्य वर्षसहस्राणि स्थितिर्द्वाविंशतिः परा ॥ ५१० ॥

२६ । भंगाः ५ स्थितिः २२००० । सर्वे भंगाः २४ ।

पांचविंशतमस्त्यस्य शेषं स्थानचतुष्टयम् ।
पंचकैकेंद्रियोक्तं यत्तदुद्योतातपोदये ॥ ५११ ॥
२१ । २४ । २६ । २७ ।
एकाग्रचतुरग्रे द्वे विंशती पूर्विके विना ।
सूक्ष्मसाधारणापूर्णैः सत्युद्योतातपोदये ॥ ५१२ ॥

२१ । २४ । तत्र सूक्ष्मपर्याप्तोनैकाविंशतिः २१ । साधारणोना चतुर्विंशतिः २४ । अत्रातपोद्योतोदयभागिनां सूक्ष्मापर्याप्तसाधारणशरीरोदयाभावाद्यशोयुग्मस्यैकतरभंगौ द्वौ द्वौ पुनरुक्तौ २ । २ ।

परघातातपोद्योतद्वितयैकतरान्वितम् ।
इदं षाड्विंशतं स्थानं पर्याप्तांगस्य जायते ॥ २६ । ५१३ ॥
अस्योत्कृष्टा जघन्या च स्थितिरन्तर्मुहूर्त्तकम् ।
भंगाः ४ ।
सोच्छ्वासमानपर्याप्तावस्तीदं साप्तविंशतम् ।
ज्ञेयंजीवितपर्यन्तं सविकल्वं चतुष्टयम् ॥ ५१४ ॥

अस्य स्थितिः परा द्वाविंशतिवर्षसहस्राणि २२००० । भंगाः ४ । एकेन्द्रियस्य सर्वे भंगाः ३२ ।

ज्ञेयैकविंशतिः पाके सामान्ये विकलेन्द्रिये ।
सा क्रमात्पंच सप्ताष्टयुक्ता नवदशाधिका ॥ ५१५ ॥

विकलाक्षस्य षट् पाकस्थानानि २१।२६।२८।२९।३०।३१।

विनैकत्रिंशतं पंच निरुद्योतोदये सति ।
तान्युद्योतोदयालीढे तत्राष्टाविंशतं विना ॥ ५१६ ॥

निरुद्योतोदये विकले २१।२६।२८।२९।३०। उद्योतोदययुक्ते विकले २१।२६।२९।३०।३१।

तत्रैकाविंशतं द्व्यक्षे निरुद्योतोदये सति ।
त्रसं तिर्यग्द्वयं द्व्यक्षं तेजः स्थिरशुभद्वये ॥ ५१७ ॥
कार्मणागुरुलघ्वाह्वे स्थूलं वर्णचतुष्टयम् ।
अनादेयं यशः पूर्णद्वितयैकतरद्विकम् ॥ ५१८ ॥
निर्माणं दुर्भगं वक्रीतौ द्व्येकक्षणस्थितिः ।
एको भंगो यशः पाके द्वौ परत्रात्र भाषितौ ॥ ५१९ ॥

१ । २ । अत्रापर्याप्तोदयाभावाद्यशःकीर्त्युदये सत्येको भंगः १ । पर्याप्तापर्याप्तोदयसद्भावादयशःकीर्त्युदये द्वौ भंगौ २ । मिलिताः ३ ।

प्रत्येकौदारिकयुगहुंडासंप्राप्तकोपघातयुतम् ।
षाड्विंशतमानुपूर्वीरहितं स्वीकृतशरीरस्य ॥ ५२० ॥
अन्तर्मुहूर्त्तकालं कायग्रहणक्षणादिदमाद्यौत् ।
भंगत्रितयोपेतं शरीरपरिपूर्णतां यावत् ॥ ५२१ ॥
२६ । भंगाः ३ ।
अष्टाविंशतमिष्टं परघातासन्नभोगतिसमेतम् ।
व्यपनीतापूर्णमिदं पूर्णांगे भंगयुगयुक्तम् ॥ ५२२ ॥

२८ । यशःपाके भंगः १ । प्रतिपक्षप्रकृत्युदयाभावादयशःपाकेप्येको भंगः १ । मिलितौ २ ।

पूर्णोच्छ्वासस्य सोच्छ्वासमेकोनात्रिंशतं स्मृतम् ।
भाषापर्याप्तिपर्यन्तामिदं भंगद्वयान्वितम् ॥ ५२३ ॥
२९ । भंगौ २ ।
इदंवचनपर्याप्तौ त्रिंशतं जीविताबधि ।
स्थानं भंगद्वयोपेतं सुदुःस्वरमुदाहृतम् ॥ ५२४ ॥

---

१ अत्रैकमात्रान्यूनता ।

स्थितिरस्य परा द्वादश वर्षाणि, अपराऽन्तर्मुहूर्त्तः । ३० ।
भंगौ २ ।

एकाग्रा च षडग्रा च विंशती द्वीन्द्रिये मते ।
अपूर्णरहिते पूर्वे प्राप्तोद्योतोदये सति ॥ ५२५ ॥

२१ । २६ । अत्र भंगाः पुनरुक्ताः २ । २ ।

सोद्योतासन्नभोरीती परघातं द्विभंगकम् ।
स्यात्षाड्विंशतमेकोनात्रिंशतं पूर्णविग्रहे ॥ ५२६ ॥

२९ । भंगौ २ ।

सोच्छ्वासमानपर्याप्तौ त्रैशतं तद्द्विभेदकम् ।
भाषापर्याप्तिपर्यन्तः कालोऽस्यान्तर्मुहूर्त्तकः ॥ ५२७ ॥

३० । भंगौ २ ।

एकत्रिंशतमुद्दिष्टं वाक्पर्याप्तौ सुदुःस्वरम् ।
द्विभेदं स्थितिरस्योक्ता परा द्वादशवार्षिकी ॥ ५२८ ॥

३१ । भंगौ २ । सर्वे भंगाः १८ ।

अष्टादश मता भंगा द्वीन्द्रिस्येति पिंडिताः ।
तस्यैव स्थानभंगादि ज्ञेयं त्रिचतुरक्षयोः ॥ ५२९ ॥
त्रीन्द्रिये त्रिंशतः कालस्तथैकत्रिंशतः परः ।
दिनान्येकोनपंचाशत्षण्मासाश्चतुरिन्द्रिये ॥ ५३० ॥

तत्र त्रीन्द्रियस्य निरुद्योतसोद्योतपाकयोः ३० । ३१ । स्थितिदिवसाः ४९ । सर्वे भंगाः १८ ॥ चतुरिन्द्रिये पूर्व-स्थानयोः ३० । ३१ । स्थितिमासाः ६ । सर्वे भंगा १८ । एवं विकलेन्द्रिये सर्वे भंगाः ५४ ।

पाकास्तिरश्चि पंचाक्षे षडोघादेकविंशतिः ।
क्रमात्षड्विंशतिर्द्वित्रिचतुःपंचयुता च सा ॥ ५३१ ॥

२१।२६।२८।२९।३०।३१।

तान्यनुद्योतपाकस्य संत्येकत्रिंशतं विना ।
उद्योतपाकयुक्तस्य संत्यष्टविंशतं विना ॥ ५३१ ॥

उद्योतोदयरहिते पंचेंद्रिये २१।२६।२८।२९।३०। उद्योतोदयसहिते २१।२६।२९।३०।३१।

अनुद्योतोदयस्येदं पंचाक्षस्यैकविंशतम् ।
तिर्यग्द्वितयपंचाक्षे तेजोगुरुलघुत्रसम् ॥ ५३३ ॥
पर्याप्तसुभगादेययशः कीर्त्तिद्विकैककम् ।
निर्माणं कार्मणं स्थूलं वर्णानां च चतुष्टयम् ॥ ५३४ ॥
शुभस्थिरद्वये भंगा एकद्वित्रिक्षणस्थितौ ।
वक्रत्तौं पूर्णपाकेऽष्टावेकेऽन्यत्रोभये नव ॥ ५३५ ॥

अत्र पूर्णोदये भंगाः ८ । सुभगादेययशःकीर्त्तिभिः सहापूर्णोदयाभावादपूर्णोदये भंगाः १ । सर्वे ९ ।

इदं त्यक्त्वाऽऽनुपूर्वीकं स्थानं षाड्विंशतं स्मृतम् ।
क्षिप्ते संस्थानसंहत्योरेकत्रौदारिकाद्विके ॥ ५३६ ॥
प्रत्येक उपघाते च स्वीकृतांगस्य देहिनः ।
आनपर्याप्तिपर्यन्ता स्थितिरन्तर्मुहूर्त्तिकी ॥ ५३७ ॥
अस्य पूर्णोदये भंगा द्वादशोनं शतत्रयम् ।
एकोऽपूर्णोदये ज्ञेयो भंगमार्गविचक्षणैः ॥ २६ । ५३८ ॥

अत्र पूर्णोदये संस्थानषट्कसंहतिषट्कयुग्मत्रयाणां ६।६।२।२।२। परस्पराभ्यासे भंगाः २८८ । शुभैः सहापूर्णोदयस्याभावादपूर्णोदये भंगाः १ ।

उक्तं च—

असंप्राप्तमनादेयमयशो हुंडदुर्भगे ।
अपूर्णेन सहोदयंति (?) पूर्णेन तु सहेतराः ॥ ५३९ ॥
सर्वे २८९ ।
पूर्णाङ्गस्य गतापूर्णमाष्टाविंशतमीरितम् ।
परघातनभोरीतियुगलैकतरान्वितम् ॥ ५४० ॥
भंगानां षट्शतीस्याच्चचतुर्विंशतिं विना ।
जघन्या च प्रकृष्टा च स्थितिरान्तर्मुहूर्त्तिकी ॥ ५४१ ॥

२८ । एते पूर्वोक्ताः २८८ । नभोरीतियुगहता भंगाः ५७६

सोच्छ्वासमानपर्याप्तावेकोनत्रिशतं मतम् ।
अत्र दक्षैर्विबोद्धव्याः स्थितिभंगाः पुरातनाः ॥ ५४२ ॥
२९ । भंगाः ५७६ ।
त्रैशतं पूर्णभाषस्य स्वरैकतरसंयुतम् ।
अत्र द्विगुणिता भंगाः परा पल्यत्रयं स्थितिः ॥ ५४३ ॥

३० । भंगाः पूर्वोक्ताः ५७६ । स्वरयुगलाहताः ११५२ ।

इत्थमुद्योतोदयरहिते पंचाक्षे भंगाः सर्वे, एवं २६०२ ।
प्राप्तोद्योतोदये एकषडग्रे विंशती बुधैः ।
पंचेंद्रिये मते पूर्वे त्यक्तापूर्णोदये परम् ॥ ५४४ ॥

२१।२६ अत्र भंगाः पुनरुक्ताः ८ । २८८ ।

स्थानं षाड्विंशतं ज्ञेयमेकोनात्रिंशतं बुधैः ।
पूर्णांगस्य ख[1]रीत्यन्यतरोद्योतान्यघातयुक् ॥ ५४५ ॥
शतानि पंच भंगानां षट्सप्तत्या समं स्फुटम् ।
प्रकृष्टोऽस्य जघन्यश्च कालोऽवाच्यंतर्मुहूर्[2]त्तकः ॥ ५४६ ॥

---

१ नभोगति २ अत्रेकाक्षराधिक्यम् ।

२९ । भंगाः ५७६ ।

आनपर्याप्तिपर्याप्ते सोच्छ्वासं त्रैशतं स्मृतम् ।
कालभंगा विबोद्धव्याः सूरिभिः पूर्वभाषिताः ॥ ५४७ ॥

३० । भंगाः ५७६ ।

तत्स्वरैकतराश्लिष्टमेकात्रिंशतमीरितम् ।
द्विघ्ना भंगा वचःपूर्णे पल्यानां त्रितयं स्थितिः ॥ ५४८ ॥

३१ । भंगाः ११५२ ।

इत्थं सोद्योतोदये पंचाक्षे भंगाः सर्वे २३०४ । उद्योतरहि- पंचाक्षे २६०२ । एवं पंचेन्द्रिये सर्वे भंगाः ४९०६ ।

सहस्राः पंच भंगानामष्टहीना निवेदिताः ।
तिर्यग्गतौ समस्तानां पिंडितानां पुरातनैः ॥ ५४९ ॥

सर्वे तिर्यग्गतौ भंगाः ४९९२ ।

एवं तिर्यग्गतिः समाप्ता ।

पाका मनुष्यगत्याऽमा समस्ता मर्त्यजन्मनाम् ।
चतुर्विंशतिपाकोनदशशेषाः पुरोदिताः ॥ ५५० ॥

२१।२५।२६।२७।२८।२९।३०।३१।९।८।

यानि स्थानानि तिर्यक्षु निरुद्योतेषु पंच वै !
पंचेंद्रियेषु मर्त्यानां तानि सामान्यभागिनाम् ॥ ५५१ ॥

२१।२६।२८।२९।३०।

अत्र तिर्यग्द्वयस्थाने भणनीयं नरद्वयम् ।
भंगास्तद्वन्मता द्व्यग्रषड्विंशतिशतप्रमाः ॥ २६०२ । ५५२ ॥

यद्यपि पूर्वमुक्तास्ते तथापि सुखार्थमुच्यन्ते—

तत्रैकविंशतं तीर्थकृत्त्वाहारकोज्झिते ।
पंचेन्द्रियं नरद्वन्द्वं तेजोऽगुरुलघुत्रसम् ॥ ५५३ ॥
निर्माणं सुभगादेययशः पर्याप्तनामसु ।
युगेष्वेकतरं वर्णचतुष्कं स्थूलकार्मणे ॥ ५५४ ॥
शुभस्थिरद्वये भंगा एकद्वित्रिक्षणस्थितौ ।
वक्रत्तौ पूर्णपाकेऽष्टावेकोऽन्यत्रोभये नव ॥ ५५५ ॥
२१ । पूर्णपाके भंगाः ८ । अपूर्णपाके १ । उभये ९ ।
प्रत्येकौदारिकद्वन्द्वोपघातसहितं स्मृतम् ।
तत्संस्थानस्य संहत्याः षट्कस्यैकतरेण च ॥ ५५६ ॥
स्थानं षड्विंशतं दक्षैरात्तदेहस्य देहिनः ।
निराकृतानुपूर्वीकं यावद्देहस्य पूर्णताम् ॥ ५५७ ॥
पर्याप्तस्योदये भंगा द्वादशोनं शतत्रयम् ।
एकोऽन्यस्योदये कालः कथितोऽन्तर्मुहूर्त्तकः ॥ ५५८ ॥
पर्याप्तोदये भंगाः २८८ । अपर्याप्तोदये १ । सर्वे २८९ ।
तदाष्टाविंशतं प्रोक्तमपर्याप्तविवर्जितम् ।
परघातखगत्येकतरयुक्तं शरीरिणः ॥ ५५९ ॥
शतानि पंच भंगानां षट्सप्तत्या सह स्फुटम् ।
पर्याप्तांगस्य निर्दिष्टः कालोऽत्रान्तर्मुहूर्त्तकः ॥ ५६० ॥
२८ । भंगाः ५७६ ।
सोच्छ्वासमानपर्याप्तावेकोनात्रिंशतं मतम् ।
बुधैरत्रावबोद्धव्याः स्थितिभंगाः पुरातनाः ॥ ५६१ ॥
२९ । भंगाः ५७६ ।
स्वरैकतरसंयुक्तं वाक्पूर्णे त्रिंशतं मतम् ।
अत्र द्विताड़िता भंगाः परा पल्यत्रयं स्थितिः ॥ ५६२ ॥

३० । भंगाः ११५२ । सर्वे मिलिताः २६०२ ।

आहारकोदयालीढे विशेष्टे नरनामनि ।
उदये पंचसप्ताष्टनवाग्रा विंशतिर्मता ॥ ५६३ ॥

२५ । २७ । २८ । २९ ।

पांचविंशतमत्रेदं नृगत्याहारकद्विके ।
कार्मणं सुभगादेये तेजो वर्णचतुष्टयम् ॥ ५६४ ॥
चतुरस्त्रोपघाताख्ये निर्मित्त्रसचतुष्टयम् ।
पंचाक्षागुरुलघ्वाह्वे शुभस्थिरयुगे यशः ॥ ५६५ ॥
आहारकोदयेस्तीदं यावत्तद्देहपूर्णताम् ।
ससद्गत्यन्यघातं तत्पूर्णांगे साप्तविंशतम् ॥ ५६६ ॥

२५ । भंगाः १ । २७ । भंगः १ ।

पूर्णोच्छ्वासस्य सोच्छ्वासमष्टविंशतमस्त्यदः ।
एको भंगोऽत्र कालस्तु विज्ञेयोऽन्तर्मुहूर्त्तकः ॥ ५६७ ॥

२९ । भंगः १ ।

एकोनात्रिंशतं स्थानं पूर्णेऽवाचि ससुस्वरम् ।
कालभंगौ मतौ पूर्वावैक्ये भंगचतुष्टयम् ॥ ५६८ ॥

२९ भंगौ २ । विशेषमनुष्ये भंगाश्चत्वारः ४ ।

तत्रैकत्रिंशतं ज्ञेयं योगिनस्तीर्थकारिणः ।
आद्ये संहतिसंस्थाने नृगत्यौदारिकद्वये ॥ ५६९ ॥
पंचाक्षं कार्मणादेये तीर्थकृत्सुभगं यशः ।
वर्णाद्यगुरुलघ्वादि त्रसादीनां चतुष्टयम् ॥ ५७० ॥
निर्मिच्छुभस्थिरद्वन्द्वे तेजः सद्गतिसुस्वरे ।
पूर्वकोटी परा वर्षपृथक्त्वं त्वपरा स्थितिः ॥ ५७१ ॥

३१ । भंगः १ । अत्रोत्कृष्टा स्थितिरन्तर्मुहूर्त्ताधिकागर्भाद्यष्टवर्षहीना पूर्वकोटी, जघन्या वर्षपृथक्त्वम् ।

नृगतिः पूर्णमादेयं पंचाक्षं सुभगं यशः ।
त्रसस्थूलमयोगेऽष्टौ पाके तीर्थकृतो नव ॥ ५७२ ॥

पाके ८ । भंगः १ । तीर्थकृता युता ९ । भंगः १ । सर्वे केवलिनो भंगाः ३ ।

षड्विंशतिशतान्युक्त्वा नवाग्राणि नृणां गतौ ।
भंगानतः परं वक्ष्ये सयोगे पाकसप्तकम् ॥ ५७३ ॥

२६०९ ।

उदये विंशतिः सैकषट्सप्ताष्टनवाधिका ।
दशाग्रा चेति विज्ञेयं सयोगे स्थानसप्तकम् ॥ ५७४ ॥

२० । २१ । २६ । २७ । २८ । २९ । ३० ।

नृगतिः कार्मणं पूर्णं तेजोवर्णचतुष्टयम् ।
पंचाक्षा गृरुलघ्वाह्व शुभस्थिरयुगे यशः ॥ ५७५ ॥
सुभगं वादरादेये निर्मित्त्रसमिति स्फुटम् ।
उदयं विंशतिर्याति प्रतरे लोकपूरणे ॥ ५७६ ॥

२० । भंगः १ ।

तत्र प्रतरे समयः १ । लोकपूरणे १ । पुनः प्रतरे १ । इत्थं त्रयः समयाः ३ ।

आद्ये संहनने क्षिप्ते प्रत्येकौदारिकद्वये ।
उपघाताख्यसंस्थानषट्कैकतरयोरपि ॥ ५७७ ॥
षाड्विंशतमिदं स्थानं कपाटस्थस्य योगिनः ।
संस्थानैकतरैः षड्भिर्भंगषट्कमिहोदितम् ॥ ५७८ ॥

२६ । भंगाः ६ ।

परघातखगत्यन्यतराभ्यां सहितं मतम् ।
तदाष्टाविंशतं स्थानं योगिनो दंडयायिनः ॥ ५७९ ॥

२८ । अत्र द्वादश भंगाः १२ ।

तदुच्छ्वाससयुतं स्थानमेकोनत्रिंशतं स्मृतम् ।
आनपर्याप्तपर्याप्तेर्भंगाः पूर्वनिवेदिताः ॥ ५८० ॥

२९ । भंगाः १२ ।

त्रैशतं पूर्णभाषस्य स्वरैकतरसंयुतम् ।
चतुर्विंशतिरत्रोक्ता भंगा भंगविशारदैः ॥ ५८१ ॥

३० । भंगाः २४ ।

पृथक्तीर्थकृता योगे स्थानानां पंचकं परम् ।
प्रथमं तत्र संस्थानं प्रशस्तौ च गतिस्वरौ ॥ ५८२ ॥

इति तीर्थकृति सयोगे स्थानानि । २१ । २७ । २९ । ३० । ३१ । एकैकेन पंचसु भंगाः ५ । एवं सयोगभंगाः ६० ।

अत्रैकत्रिंशतं स्थानं पंचमं पूर्वभाषितम् ।
भंगो न पुनरुक्तत्वात्तदीयः परिगृह्यते ॥ ५८३ ॥

शेषाः ५९ । सहैतैस्ते पूर्वोदिताः २६०९ । एतावंतः २६६८ । इति सर्वे नृगतिभंगाः ।

एवं मनुष्यगतिः समाप्ता ।

अस्त्येकपंचसप्ताष्टनवाग्रा विंशतिः क्रमात् ।
नाम्नो दिवौकसां रीतावुदये स्थानपंचकम् ॥ ५८४ ॥

२१ । २५ । २७ । २८ । २९ ।

तत्रैकविंशतं पूर्वं देवद्वितयकार्मणे ।
स्थूलं शुभस्थिरद्वन्द्वे यशो वर्णचतुष्टयम् ॥ ५८५ ॥
पंचाक्षसुभगादेये तेजोऽगुरुलघुत्रसम् ।
निर्माणमिति वक्रत्तविकद्वित्रिक्षणस्थितिः ॥ ५८६ ॥
२१ । भंगः १ ।
तदपास्तानुपूर्वीकं पांचविंशतमन्वितम् ।
प्रत्येकचतुरस्रोपघातवैक्रियिकाद्विकैः ॥ ५८७ ॥
इदं गृहीतदेहस्य यावद्देहस्य पूर्णताम् ।
एको भंगोऽस्य कालस्तु भवेदन्तर्मुहूर्त्तकः ॥ ५८८ ॥
२५ । भंगः १ ।
सत्खगत्यन्यघाताभ्यां तद्युक्तं साप्तविंशतम् ।
कालोऽप्यस्यांगपर्याप्तौ विज्ञेयोऽन्तर्मुहूर्त्तकः ॥ ५८९ ॥
२७ । भंगः १ ।
पर्याप्तानस्य सोच्छ्वासं तदाष्टविंशतं स्मृतम् ।
यावद्वचनपर्याप्तिस्तावत्कालोऽस्य भाषितः ॥ ५९० ॥
२८ । भंगः १ ।
एकोनत्रिंशतं भाषापर्याप्तौ तत्ससुस्वरम् ।
जीवितव्यावधिः कालो भंगानामेषु पंचकम् ॥ ५९१ ॥
२९ । भंगः १ । एकत्र ५ ।

---

१ तच्छिगिवीसं ठाणं देवदुगं तेज कम्म वण्णचदुं ।
अगुरुयलहुपंचिंदिय तस बारय पज्जत्तं ॥
थिरमथिरं सुभमसुभं सुहयं आदेज्जयं च सणिमिणं ।
विग्गहगई हिएए एक्कं वा दोव समयाणि ॥
( प्राकृतपंचसंग्रहात् )

भाषापर्याप्तिपर्याप्ते प्रथमात्क्षणतः स्थितिः ।
जीवितव्यावधिः प्रोक्ता कृतजीवितनिश्चयैः ॥ ५९२ ॥
दशवर्षसहस्राणि त्रयस्त्रिंशत्पयोधयः ।
अंतर्मुहूर्तहीने स्तस्ते जघन्याजघन्यके ॥ ५९३ ॥
सकलान्तर्मुहूर्त्तोना पूर्णभाषे स्थितिर्जिनैः ।
प्रोक्तोपपादिकेऽन्यत्र जघन्यांतर्मुहूर्त्तिकी ॥ ५९४ ॥

इति देवगतिः समाप्ता ।

सैकादशाः स्मृताः पाकाः षड्सप्ततिशतप्रमाः ।
एकोनषष्टिरन्यास्ति समुद्धातगते जिने ॥ ५९५ ॥
७६११ । समुद्धातगते नाम्नः पाका ५९ ।
त्रिद्व्येकसहिता सत्वे नवतिर्नवतिः परा ।
क्रमादष्टचतुर्द्व्यग्राऽशीतिः सा च निवेदिता ॥ ५९६ ॥
निरेकद्वित्रिकाशीतिर्नाम्नो दश नवापराः ।
सत्त्वस्थानानि विज्ञाय योज्यानीति त्रयोदश ॥ ५९७ ॥
९३।९२।९१।९०।८८।८४।८२।८०।७९।७८।७७।१०।९।
तत्र त्रिनवतिः सर्वास्त्रीर्थेशाहारकाद्विकैः ।
हीनाः स्थानत्रये कार्याः क्रमादेकद्विकात्रिभिः ॥ ५९८ ॥
आद्ये स्थाने ९३ । त्रिष्वतः स्थानेषु ९२।९१।९० ।
त्यक्ते देवद्वये श्वभ्रचतुष्के नृद्वये क्रमात् ।
नवतेर्नरतिर्यक्षु स्थानानां त्रितयं स्मृतम् ॥ ५९९ ॥
नरतिर्यक्षु ८८ । ८४ । तिर्यक्षु ८२ ।
तिर्यङ्नारकयोर्युग्मे एकाक्षं स्थावरातपौ ।
विकलत्रिकमुद्योतं सूक्ष्मं साधारणाह्वयम् ॥ ६०० ॥

आद्याच्चतुष्कतस्त्यक्त्वा क्रमादेतास्त्रयोदश ।
अनिवृत्त्यादिषु ज्ञेयमशीत्यादिचतुष्टयम् ॥ ६०१ ॥

अनिवृत्त्यादिषु पंचसु ८० । ७९ । ७८ । ७७ ।

पूर्णं सुभगमादेयं पंचेंद्रियनरद्वये ।
त्रसं स्थूलं यशस्तीर्थकृन्निर्योगे दश स्मृताः ॥ ६०२ ॥

अयोगे तीर्थकरे १० । तीर्थकरोनाः परत्र ९ ।

चत्वार्यसंयताद्येषु प्रथमान्यष्टसु स्फुटम् ।
सत्त्वे मिथ्यादृशः षट्कं द्वानवत्यादिकं विदुः ॥ ६०३ ॥

अत्रासंयताद्येषूपशांतांतेष्वष्टसु ९३ । ९२ । ९१ । ९० ।
मिथ्यादृशः ९२ । ९१ । ९० । ८८ । ८४ । ८२ ।

नवतिः सासने ज्ञेया मिश्रे द्वानवतिः पुनः ।
तिर्यक्षु द्वानवत्यामा नवत्यादिचतुष्टयम् ॥ ६०४ ॥

सासने ९० । मिश्रे ९२ । तिर्यक्षु ९२ । ९० । ८८ । ८४ । ८२ ।

आद्यं चतुष्टयं देवे श्वाभ्रे त्रिनवतिं विना ।
निर्द्व्यशीतीनि सर्वाणि स्थानानि नरजन्मसु ॥ ६०५ ॥

श्वाभ्रेषु ९२ । ९१ । ९० । देवेषु ९३ । ९२ । ९१ ।
९० नरेषु सर्वाणि द्व्यशीतिं विना १२ ।

नाम्नः सत्प्ररूपणा समाप्ता ।

त्रिपंचषडुपेताया विंशतेर्बंधने विदुः ।
उदये नव सत्तायां क्रमतः पंच सूरयः ॥ ६०६ ॥

| | | | |
|---|---|---|---|
| बंध | २३ | २५ | २६ |
| उदय | ९ | ९ | ९ |
| सत्ता | ५ | ५ | ५ |

बंधेऽष्टाविंशतेरष्टौ पाके सत्त्वे चतुष्टयम् ।
एकोनत्रिंशतो बंधे नव सप्तान्ययोः क्रमात् ॥ ६०७ ॥
बं. २८ । उ. ८ । स. ४ । एकोनत्रिंशतो बंधे—बं २९ ।
उ ९ । स ७ ।
बंधने त्रिंशतः पाके नव सत्त्वे तु सप्तकम् ।
बंधादित्रितये नामस्थानानीति विदुर्बुधाः ॥ ६०८ ॥
बंध ३० । उदय ९ । सत्ता ७ ।
त्रिपंचषड्युक्ताया विंशतेर्बंधने सति ।
अंतिमं द्वितयं हित्वा ज्ञेयाः पाका नवादिमाः ॥ ६०९ ॥
स्थानानां पंचकं द्व्यग्रा नवतिः सा च केवला ।
अशीतिरपि सत्तायां सहिताष्टचतुर्द्विभिः ॥ ६१० ॥

बंधस्थानेषु २३।२५।२६ । प्रत्येकं नव पाकस्थानानि २१।२५।२६।२७।२८।२९।३०।३१ । सत्तास्थानानि ९२।९०।८८।८४।८२ ।

पूर्वबंधत्रये ज्ञेयमुदये सप्तविंशतेः ।
द्व्यशीतिवर्जितं सत्त्वे पूर्वं स्थानचतुष्टयम् ॥ ६११ ॥
२३।२५।२६ । उदये २७ । सत्तायां ९२।९०।८८।८४ ।

इति बंधत्रयं समाप्तम् ।

चतुर्विंशतिमत्यस्य[1] तथा द्वितयमंतिमम् ।
अस्त्यष्टाविंशतेर्बंधे पाकानामष्टकं परम् ॥ ६१२ ॥
क्रमात् त्रिनवतिं तत्र निरेकाद्वित्रिपंचकम् ।
सत्तास्थानानि चत्वारि सामान्येन विदुर्बुधाः ॥ ६१३ ॥

बंधे २८ । पाके २१।२५।२६।२७।२८।२९।३०।३१ । सत्त्वे ९२।९१।९०।८८ ।

---

१ त्यक्त्वा ।

विंशती स्तः षडेकाग्र पाके बंधेऽष्टविंशतेः ।
नवतिर्द्वानवत्याम[1] सत्त्वे स्थानद्वयं पुनः ॥ ६१४ ॥
एषा क्षायिकसद्दृष्टौ मानवे कुरुवर्षजे ।
विशेषणाववबोद्धव्या स्थानत्रितयवेदिभिः ॥ ६१५ ॥
बंधे २८ । उदये २६।२१ । सत्त्वे ९२।९० ।
पंचसप्ताग्रविंशत्योः प्रमत्तस्योदये सति ।
अष्टाविंशतिबंधोऽस्ति सती[2] द्वानवतिः पुनः ॥ ६१६ ॥

आहारकारंभकेऽप्रमत्ते बंधे २८ । उदये २५।२७ । सत्त्वे ९२ ।

विंशती स्तो नवाष्टाग्रे पाके बंधेऽष्टविंशतेः ।
सत्तायां नवतिद्वयग्रा नवतिः केवला परा ॥ ६१७ ॥
असंयतस्य सद्दृष्टेर्बंधेऽसावष्टविंशतेः ।
अप्रमत्ते च विज्ञेयः सदाहारककर्मणि ॥ ६१८ ॥
बंधे २८ । उदये २९।२८ । सत्त्वे ९२।९० ।
उदये त्रिंशतः सत्त्वे नवतिर्द्व्युत्तरा च सा ।
स्यादष्टाविंशतेर्बंधो मिथ्यादृष्ट्यादिपंचके ॥ ६१९ ॥
बंधे २८ । उदये ३० । सत्त्वे ९२।९० ।
बंधोऽष्टाविंशतेः पाकस्त्रिंशतो नवतिः सती ।
एकाग्रा तीर्थकर्तृत्वसत्त्वे द्वित्रिक्षितिश्रिताम् ॥ ६२० ॥
बंधे २८, उदये ३०, सत्त्वे ९१,
उदयस्त्रिंशतः सत्त्वमष्टाशीतेः प्रजायते ।
नरतिर्यक्षु बंधेऽष्टाविंशतेर्वामदृष्टिषु ॥ ६२१ ॥

---

१ सह । २ सत्ता ।

बंधे २८ । उदये ३० । सत्त्वे ८८ ।

एकाग्रत्रिंशतः पाके नवतिद्वर्युत्तरा च सा ।
सत्त्वेऽष्टाविंशतेर्बन्धो मिथ्यादृष्ट्यादिपंचके ॥ ६२२ ॥

बंधे २८ । उदये ३१ । सत्त्वे ९२ । ९० ।

अष्टाशीतिः सती पाकः सैकायाः त्रिंशतः पुनः ।
मिथ्यादृष्टिषु तिर्यक्षु बंधेऽष्टाविंशतेः सति ॥ ६२३ ॥

बंधे २८ । उदये ३१ । सत्त्वे ८८ ।

इत्यष्टाविंशतेर्बंधः समाप्तः ।

एकोनत्रिंशतो बंधे त्रिंशतश्च नवोदयाः ।
अन्तिमं द्वितयं हित्वा सामान्येन निवेदिताः ॥ ३२४ ॥
सत्तायामादितः सप्त द्व्यशीत्यंतानि संति वै ।
अत्र स्थानानि सामान्यादतो वक्ष्ये विशेषतः ॥ ६२५ ॥

बंधे २९ । ३० । पाकाः प्रत्येकं नव २१ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । सत्तास्थानानि सप्त ९३ । ९२ । ९१ । ९० । ८८ । ८४ । ८२ ।

एकोनत्रिंशतो बंध उदयोऽस्त्येकविंशतेः ।
ऽ्येकाग्रे नवती सत्यौ बद्धतीर्थकरे नरि ॥ ६२६ ॥

विग्रहगतिगते बंधे २९ । उदये २१ । सत्त्वे ९३ । ९१ ।

पूर्वौ बंधोदयौ सत्त्वे नवतिद्वर्युत्तरा च सा ।
चातुर्गतिकजीवानां विग्रहार्त्तिव्यतिक्रमे ॥ ६२७ ॥

बंधे २९ । उदये २१ । सत्त्वे ९२ । ९० ।

चतुरष्टयुताऽशीतिः सत्त्वे बंधोदयौ च तौ ।
नरतिर्यक्षु तिर्यक्षु द्व्यशीतिः श्रितविग्रहे ॥ ६२८ ॥

नरतिर्यक्षु बंधे २९ । उदये २१ । सत्त्वे ८४ । ८८ ।
तिर्यक्षु बंधे २९ । उदये २१ । सत्त्वे ८२ ।

चतुर्विंशतिरेकाक्षे पाके बंधः पुरातनः ।
सप्तादिमानि सत्तायां तृतीयप्रथमे विना ॥ ६२९ ॥

अपूर्णैकाक्षे बंधे २९ । उदये २४ । सत्त्वे ९२ । ९० । ८८
८४ । ८२ ।

पंचाग्रा विंशतिः पाके बंधः पूर्णे पुरातनाः ।
आद्यानि सप्त सत्तायां चतुर्गतिगतेंऽगिनि ॥ ६३० ॥
परं भवति तिर्यक्षु त्र्येकाग्रे नवती विना ।
प्रजायंते न तिर्यंचः सत्त्वे तीर्थकृतो मतः ॥ ६३१ ॥

बंधे २९ । उदये २५ । सत्त्वे ९३ । ९२ । ९१ । ९० ।
८८ । ८४ । ८२ ।

एकोनत्रिंशतो बंधः सदाद्यं स्थानसप्तकम् ।
त्रिंशत्पाके तथा त्रिंशदेकाद्वित्रिचतुश्च्युताः ॥ ६३२ ॥

बंधे २९ । यथासंभवमुदये ३०।२९।२८।२७।२६ । सत्त्वे
९३।९२।९१।९०।८८।८४।८२ ।

अस्त्येकत्रिंशतः पाके बंधः पूर्वनिवेदितः ।
तृतीयप्रथमापोढं सदाद्यं स्थानसप्तकम् ॥ ६३३ ॥

बंधे २९ । उदये ३१ । सत्त्वे ९२।९०।८८।८४।८२ ।

इत्येकोनत्रिंशतो बंधः समाप्तः ।

एकोनत्रिंशतो बंधे पाकस्थानादि यन्मतम् ।
तत्त्रिंशतोऽपि निःशेषं बंधस्थाने निबुद्ध्यताम् ॥ ६३४ ॥
विशेषं त्रिंशतो बंधे स्यात्पाकः पंचविंशतेः ।
सप्तादिमानि सत्तायां स्थानानीति विदुर्बुधाः ॥ ६३५ ॥

त्र्येकाग्रे नवती सत्त्वे देवनारकयोर्मते ।
द्व्यशीतिरथ तिर्यक्षु पूर्वौ बंधोदयौ स्मृतौ ॥ ६३६ ॥
चातुर्गतिकजीवानां नवतिर्द्व्युत्तरा च सा ।
अशीतिश्चतुरष्टाग्रा सत्त्वे तिर्यक्षु नृष्वपि ॥ ६३७ ॥

सामान्येन त्रिंशद्बंधे ३० । उदये २५ । सत्त्वे ९३।९२।९१।९०।८८।८४।८२ । एषां सप्तस्थानानां विभागः देव-नारकयोः ९३।९१ । तिर्यक्षु ९२ । चातुर्गतिकजीवेषु ९२ । ९० । नरतिर्यक्षु ८८।८४ ।

पाके षड्विंशतिः सत्त्वेऽशीतिस्तिर्यक्षु सद्विका ।
नवत्यादित्रयं तिर्यङ्नृषु द्वानवतिः परा ॥ ६३८ ॥

त्रिंशद्बंधे ३० । तिर्यक्षूदये २६ । सत्त्वे ८२ । तिर्यक्षु बंधे ३० । उदये २६ । सत्त्वे ९२।९०।८८।८४ ।

संत्येकपंचसप्ताष्टनवाग्रा विंशतिः क्रमात् ।
उदयास्त्रिंशतो बंधे सदाद्यं स्थानसप्तकम् ॥ ६३९ ॥

बंधे ३० । उदये २१।२५।२७।२८।२९ । सत्त्वे ९३।९२।९१।९०।८८।८४।८२ ।

त्रिंशत्सैका च सा पाके विंशतिः षट्चतुर्युता ।
सत्तास्थानानि तान्यत्र त्र्येकाग्रे नवती विना ॥ ६४० ॥

बंधे ३० । उदये ३१।३०।२६।२४ । सत्त्वे पंच ९२।९०।८८।८४।८२ ।

त्रिंशतो बंधः समाप्तः ।

एकाग्रत्रिंशतो बंधे त्रिंशत्पाकेऽस्ति नामनि ।
सप्तमाष्टमयोः सत्त्वे त्र्युत्तरा नवतिर्मता ॥ ६४१ ॥

बंधे ३१ । उदये ३० । सत्त्वे ९३ ।

भाषितो बध्नतश्चैकमुदयस्त्रिंशतः स्फुटम् ।
सत्तायां शमके प्राज्ञैराद्यं स्थानचतुष्टयम् ॥ ६४२ ॥
क्षपकेष्वष्ट सत्तायां विमुच्योपरिमद्वयम् ।
अग्रस्थानानि चत्वारि चत्वारि प्रथमानि च ॥ ६४३ ॥

उपशमकेषु बंधे १ । उदये ३० । सत्त्वे ९३ । ९२ । ९१ । ९० । क्षपकेषु सत्त्वे ९३ । ९२ । ९१ । ९० । ८० । ७९ । ७८ । ७७ ।

त्रिंशत्सैका च सा पाके नष्टबंधे नवाष्ट च ।
चत्वार्याद्यानि सत्तायां षडग्राणि यथागमम् ॥ ६४४ ॥

नष्टबंधे पाकाः ३१ । ३० । ९ । ८ सत्त्वे ९३ । ९२ । ९१ । ९० । ८० । ७९ । ७८ । ७७ । १० । ९ ।

अस्य विशेषो व्याख्यायते—

क्षणेन्त्ये सप्तमेऽपूर्वेऽनिवृत्तिर्दशमो यशः ।
एकं बध्नंति चत्वारः परे संति न बंधकाः ॥ ६४५ ॥

यशोबंधकास्त्रयः १ । १ । १ । अबंधकाश्चत्वारः ० । ० । ० । ० ।

पाके त्रिंशदपूर्वादिपंचके योगिनः पुनः ।
त्रिंशत्सैका च सा पाके गतयोगे नवाष्ट च ॥ ६४६ ॥

अपूर्वादिषु पाके ३० । ३० । ३० । ३० । ३० । योगिनि ३० । ३१ । नियोगे ९ । ८ ।

शमकेषु चतुर्ष्विष्टमाद्यं स्थानचतुष्टयम् ।
षोडशप्रकृतिध्वंसमकुर्वत्यानिवृत्तिके ॥ ६४७ ॥

---

१ ‘ क ’ ‘ ख ’ पुस्तकयोर्नोपलब्धोयम् पाठः इति स्वकल्पित एव ।

सत्तत्र क्षपिते तस्मिन्नशीत्यादिचतुष्टयम् ।
तत्सूक्ष्मादित्रये सत्वे निर्योगोपांतिमे क्षणे ॥ ६४८ ॥
प्रोक्ता दश नव प्राज्ञैर्नियोगस्यांतिमे क्षणे ।
शमकचतुष्कापूर्वानिवृत्याद्यनवांशेषुं ॥ ६४९ ॥
९२ । ९२ । ९१ । ९० ।

अनिवृत्तिशेषनवांशाष्टकसूक्ष्मक्षीणसयोगनिर्योगोपांतिमक्षणेषु सत्त्वे ८० । ७९ । ७८ । ७७ । निर्योगांत्यक्षणे १० । ९ ।

एवं नामप्ररूपणा समाप्ता ।

स्थानानां त्रिविकल्पानां कर्त्तव्या विनियोजना ।
अतो जीवगुणस्थाने क्रमतः सर्वकर्मणाम् ॥ ६५० ॥
बंधनोदयसत्त्वेषु ज्ञानावृत्त्यंतराययोः ।
पंच जीवसमासेषु निर्बंधे पाकसत्त्वयोः ॥ ६५१ ॥

जीवसमासेषु त्रयोदशसु बंधे ५ । उदये ५ । सत्त्वे ५ । चतुर्दशे संज्ञिनि पर्याप्ते मिथ्यादृष्ट्यादिसूक्ष्मान्ते बंधत्रये, बंधे ५ । उदये ५ । सत्त्वे ५ । निर्बन्धोपरतबंधयोरुपशांतक्षीणयोः पाके सत्त्वे च ५ । ५ ।

त्रयोदशसु दृग्रोधे नव बंधनसत्त्वयोः ।
चतस्रः पंच वा पाके पूर्णे संज्ञिनि भाषिताः ॥ ६५२ ॥
गुणस्थानोदिता भंगा जीवस्थाने चतुर्दशे ।
वेद्यायुर्गोत्रकर्माणि भाषित्वा वच्मि मोहनम् ॥ ६५३ ॥

त्रयोदशसु, बं. ९,९ । उ. ४,५ । स. ९,९ । संज्ञिनि पूर्णे मिथ्यादृष्टिसासनयोः, ९,९ । ४,५ । ९,९ । मिश्राद्य-

---

२ छन्दोभंगः ।

पूर्वकरणद्वयप्रथमसप्तमभागं यावत्, ६,६ । ४,५ । ९,९ । शेषापूर्वानिवृत्तिसूक्ष्मोपशमकेषु क्षपकेष्वपूर्वशेषसप्तमभागेषु षट्स्वनिवृत्तेरसंख्यातभागं यावत्, ४,४ । ४,५ । ९,९ । ततः परमनिवृत्तेः शेषसंख्यातभागे सूक्ष्मक्षपके च ४,४ । ४,५ । ६,६ । शान्ते, ०,० । ४,५ । ९,९ । क्षीणाद्विचरमक्षणे, ०,० । ४,५ । ६,६ । क्षीणचरमक्षणे, ० । ४ । ४ । एवं सर्वे पिंडिताः १३ ।

वेद्यस्य द्वाषष्टिस्त्रियुतं शतमायुषो विकल्पानाम् ।
चत्वारिंशद्गोत्रे सप्ताग्राऽवाचि जीवेषु ॥ ६५४ ॥

जीवसमासेषु भंगाः ६२ । १०३ । ४७ ।

प्रत्येकं चत्वारो भंगाः संत्यादिमाश्चतुर्दशसु ।
षट्कं केवलियुग्मे द्वाषष्टिर्जायते वेद्ये ॥ ६५५ ॥

चतुर्दशसु प्रत्येकमादिमाश्चत्वारः

| | | | | |
|---|---|---|---|---|
| बं. | १ | १ | ० | ० |
| उ. | १ | ० | १ | ० |
| स. | १० | १० | १० | १० |

इति, योगिनि द्वावाद्यौ बं १ । बं १ । उ. १ । उ. ० । स १० । स १० । अयोगेऽपि द्वौ बंधेन विनाद्यावुपांतिमे समये १,० । १०,१० । द्वावयोगस्यांत्ये समये ०,१ । ०,१ । इत्थं सर्वे ६२ ।

देवायुर्नरकायुर्बध्नीतः संज्ञ्यसंज्ञिनौ पूर्णौ ।
द्वादश नैकाक्षाद्या जीवसमासाः परे जातु ॥ ६५६ ॥
पंचैकादशसूक्ताः प्रत्येकमसंज्ञिनि नव पर्याप्ते ।
संज्ञिनि दशकापूर्णे विंशतिरष्टाधिकाऽपूर्णे ॥ ६५७ ॥

केवलिभंगेन युतं त्रियुतमायुषो विकल्पानाम् ।
विज्ञातव्यं सद्भिर्जीवसमासेषु सर्वेषु ॥ १०३ । ६५८ ॥

आसामर्थः—यस्मादेकादश जीवसमासाः श्वभ्रदेवायुषी न बध्नंति, ततस्तेषु तिरश्चामायुर्बंधभंगेभ्यो नवभ्यः श्वभ्रायुर्बंध भंगौ द्वौ, देवायुर्बंधभंगौ द्वौ, अपाकृत्य शेषा जीवसमासेष्वेकादशसु पंचपंचेति पंचपंचाशद्भवंति ।

तत्र पंचानां संदृष्टिः—

| | | | | |
|---|---|---|---|---|
| ० | २ | ० | ३ | ० |
| २ | २ | २ | २ | २ |
| २ | २२ | २२ | २३ | २३ |

ततः परमसंज्ञिनि पर्याप्ते नव तिर्यग्भंगाः—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ० | २ | ० | १ | ० | ३ | ० | ४ | ० |
| २ | २ | २ | २ | २ | ३ | २ | २ | २ |
| २ | २२ | २२ | २१ | २१ | २३ | २३ | २४ | २४ |

संज्ञिनः दशापूर्णे यस्मादपूर्णसंज्ञी तिर्यङ्मनुष्यश्च श्वभ्रदेवायुषी न बध्नीतस्तस्मात्तिरश्चां मनुष्याणां चायुर्बंधभंगेभ्यो नवभ्यः श्वभ्रायुर्बंधभंगौ देवायुर्बंधभंगौ च हित्वा शेषाः पंच पंचायुर्बंधभंगाः ५ । ५ ।

| | | | | |
|---|---|---|---|---|
| ० | २ | ० | ३ | ० |
| २ | २ | २ | २ | २ |
| २० | २२ | २२ | २३ | २३ |

| | | | | |
|---|---|---|---|---|
| ० | ३ | ० | २ | ० |
| ३ | ३ | ३ | ३ | ३ |
| ३ | ३३ | ३३ | ३२ | ३२ |

इत्थमपूर्णे संज्ञिनि भंगाः १० ।
पंच श्वभ्रे भंगा नव नव तिर्यङ्मनुष्ययोर्ज्ञेयाः ।
क्रमतो बध्नन् स्वायुर्बंधेऽपि च पंचपंच देवेषु ॥ ६५९ ॥
५ । ९ । ९ । ५ ।

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| चं | ० | २ | ० | ३ | ० | ० | १ | ० | २ | ० | ३ | ० | ४ | ० |
| उ | १ | १ | १ | १ | १ | २ | २ | २ | २ | २ | २ | २ | २ | २ |
| स | १ | १२ | १२ | १३ | १३ | २ | २१ | २१ | २२ | २२ | २३ | २३ | २४ | २४ |

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | १ | ० | २ | ० | ३ | ० | ४ | ० | ० | २ | ० | ३ | ० |
| ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ४ | ४ | ४ | ४ | ४ |
| ३ | ३१ | ३१ | ३२ | ३२ | ३३ | ३३ | ३४ | ३४ | ४ | ४२ | २ | ४३ | ४३ |

पूर्णे संज्ञिनि श्वभ्रतिर्यङ्मनुष्यदेवायुर्बंधभंगा भवन्त्येते ५।९। ९।५ । पिंडिताः २८ । एकः[1] केवलिनि, ० । ३ । ३ । इत्थं सर्वे १०३ ।

गोत्रभंगाः कथ्यंते—

उच्चं बंधे नीचं पाके सत्त्वं द्वयं द्वयोर्नीचम् ।
उभयं सत्त्वे सर्वं नीचं भंगास्त्रयो ज्ञेयाः ॥ ६६० ॥

| | | |
|---|---|---|
| १ | ० | ० |
| ० | ० | ० |
| १० | १० | ०० |

चत्वारिंशद्दितैका जीवसमासेषु ते त्रयोदशसु ।
संज्ञिनि षट्र पर्याप्ते प्रथमौ द्वौ केवलिद्वन्द्वे ॥ ६६१ ॥

प्रत्येकं त्रयस्त्रयस्त्रयोदशास्विति ३९ । संज्ञिनि पर्याप्ते सप्तानां भंगानां षट्र प्रथमाः—

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | ० | ० | ० | |
| १ | ० | १ | ० | ० | १ |
| १० | १० | १० | १० | ०० | १० |

केवलिनोरंतिमौ द्वौ,—१,१ । १०,१ । एते ३९ । ६ । २ । पिंडिताः ४७ ।

गोत्रे भंगाः सर्वे चत्वारिंशद्भवंति सप्ताग्राः ।
वक्ष्याम्यधुना मोहे भंगविकल्पान् समासेन ॥ ६६२ ॥
सूक्ष्मस्यापूर्णानां सप्तानामष्टजन्मिनामित्थम् ।
द्वाविंशतिरथ बंधे पाके सत्त्वे त्रितयमाद्यम् ॥ ६६३ ॥

---

१ गत एका यस्याः ।

अष्टानां, बंधे २२ । पाके १०।९।८ । सत्त्वे २८।२७।२६ ।
संज्ञिनमेकं हित्वा पंचानामादिमानि पूर्णानाम् ।
द्वे चत्वारि त्रीणि क्रमतः स्युर्बंधपाकसत्त्वेषु ॥ ६६४ ॥

पंचानां पूर्णानां, बंधे २२ । २१ । उदये १० । ९ । ८ । ७ । सत्त्वे २८ । २७ । २६ ।

संज्ञिनि पूर्णे बंधे दश पाके नव मतानि सत्तायाम् ।
पंचदश स्थानानि प्रमथितमोहारिभिर्मोहे ॥ ६६५ ॥

संज्ञिनि पूर्णे सर्वाणि बंधे २२।२१।१७।१३।९।५।४।३।२।१ । पाके १०।९।८।७।६।५।४।२।१ । सत्तायां २८।२७।२६।२४।२३।२२।२१।१३।१२।११।५।४।३।२।१ ।

इतो नामकर्म कथ्यते—

बंधे पाके सत्त्वे पंच द्वे पंच पंच चत्वारि ।
पंच त्रितये पंच क्रमतः पंचाथ षट् पंच च ॥ ६६६ ॥
षट् षट् पंचाष्टाष्टावेकादश नामकर्मणः संति ।
स्थानानि स्थानज्ञैर्जीवसमासेषु योज्यानि ॥ ६६७ ॥

| | | | | | |
|---|---|---|---|---|---|
| ५ | ५ | ५ | ५ | ६ | ८ |
| २ | ४ | ५ | ६ | ६ | ८ |
| ५ | ५ | ५ | ५ | ५ | ११ |

सप्तापर्याप्तकाः सूक्ष्मो बादरो विकलत्रयम् ।
असंज्ञी क्रमतः संज्ञी स्वामिनः स्युश्चतुर्दश ॥ ६६८ ॥
क्रमादेषां स्वामिसंख्या ७।१।१।३।१।१ ।
विंशतिरपूर्णकानां त्रिपंचषट्नवदशाधिका बंधे ।
स्थानानि पंच दक्षैः सप्तानामिह निगद्यन्ते ॥ ६६९ ॥
२३।२५।२६।२९।३० ।

एकविंशतिपाकोऽस्ति सूक्ष्मापर्याप्तकेंगिनि ।
चतुर्विंशतिपाकोऽस्ति स्थूलापर्याप्तके पुनः ॥ ६७० ॥
२१ । २४ ।
पाकेऽन्येषामपूर्णानां पंचानां विंशती स्मृते ।
एकषट्सहिते प्राज्ञैरतः सत्त्वं निगद्यते ॥ ६७१ ॥
२१ । २६ ।
द्व्युत्तरा नवतिः सा च रहिता द्विषडष्टभिः ।
नवतिः क्रमतस्तेषां सत्त्वस्थानानि पंच वै ॥ ६७२ ॥
९२।९०।८८।८४।८२ ।

सप्तस्वपूर्णेस्विति गतम् ।

सूक्ष्मे स्थानानि पूर्वाणि पर्याप्ते बंधसत्त्वयोः ।
पाकेऽस्त्येकचतुःपंचषडग्रा विंशतिः पुनः ॥ ६७३ ॥

सूक्ष्मे पूर्णे बंधाः २३ । २५ । २६ । २९ । ३० । उदयाः २१।२४।२५।२६ । सत्त्वानि ९२।९०।८८।८४।८२ ।

पूर्णो स्थानानि पूर्वाणि बादरे बंधसत्त्वयोः ।
सप्तविंशतिपर्यन्ताः पाकाः संत्येकविंशतेः ॥ ६७४ ॥

पूर्णे बंधाः २३।२५।२६।२९।३० । उदयाः २१।२४।२५।२६।२७ । संति ९२।९०।८८।८४।८२ ।

विकलत्रितये बंधसत्वस्थानानि पूर्णके ।
प्रत्येकं संति पूर्वाणि पंचसंख्यानि निश्चितम् ॥ ६७५ ॥
एकाद्वित्रिचतुर्न्यूना द्वात्रिंशद्विंशतिः पुनः ।
षडेकाग्रात्क्रमात्षट्कं पाकस्थानगतं स्मृतम् ॥ ६७६ ॥

बंधे २३।२५।२६।२९।३० । उदये २१।२६।२८।२९।३०।३१ । सत्त्वे ९२।९०।८८।८४।८२ ।

त्रिंशदंताःमता बंधास्त्रयोविंशतिपूर्वकाः ।
विकलाक्षगताः सत्त्वपाकाः पूर्णे त्वसंज्ञिनि ॥ ६७७ ॥

बंधाः २३।२५।२६।२८।२९।३० । उदयाः २१।२६। २८।२९।३०।३१ । सन्ति ९२।९०।८८।८४।८२ ।

बंधे सर्वाणि पाकेऽष्ट पर्याप्ते सति संज्ञिनि ।
नवाष्टकं परित्यज्य चतुरग्रां च विंशतिम् ॥ ६७८ ॥
संति स्थानानि सत्तायां परिमुच्याग्रिमं द्वयम् ।
आद्यान्येकादशान्यानि क्रमेणात्र त्रिसंशयम् ॥ ६७९ ॥

बंधाः २३।२५।२६।२८।२९।३०।३१।१ । उदयाः २१। २५।२६।२७।२८।२९।३०।३१ । संति ९३।९२।९१।९०। ८८।८४।८२।८०।७९।८७।७७ ।

उदये क्रमतस्त्रिंशदेकत्रिंशन्नवाष्ट च ।
षडग्रिमाणि सत्तायां संति केवलिनोर्द्वये ॥ ६८० ॥

उदये ३०।३१।९।८ । सत्तायां ८०।७९।७८।७७।१०।९ ।

इति जीवसमासप्ररूपणा समाप्ता ।

बंधनोदयसत्त्वेषु ज्ञानरोधान्तराययोः ।
गुणानां दशके पंच द्वितये पाकसत्त्वयोः ॥ ६८१ ॥

गुणस्थानदशके,—५,५ । ५,५ । ५,५ । शान्तक्षीणयोः— ०,० । ५,५ । ५,५ ।

दृग्रोधे नवकं षट्कं चतुष्टयमिति त्रयम् ।
बंधे सत्त्वे द्वयं पाके चतुष्कं पंचकं च वै ॥ ६८२ ॥
आद्यद्वितीययोः संति बंधे सत्त्वे नव स्फुटम् ।
चतस्रः पंच वा संति सर्वात्राप्युदये पुनः ॥ ६८३ ॥

मिथ्यादृष्टिसासादनयोः—बं. ९,९ । उ. ४,५ । स. ९,९ ।

षड्बंधकेषु सत्तायां संति प्रकृतयो नव ।
मिश्राद्येष्वादिमापूर्वसप्तभागावसानिकाः ॥ ६८४ ॥

मिश्राद्येष्वपूर्वकरणद्वयप्रथमसप्तमभागं यावत्,—६,६ । ४,५ । ९,९ ।

चतुर्बंधो मतो द्वेधा शमकेतरभेदतः ।
शमके नव सत्तायां क्षपके षट् प्रकीर्त्तिताः ॥ ६८५ ॥
अष्टमे नवमे सूक्ष्मोपशमके नव भाषिताः ।
क्षपके नवमे सूक्ष्मे सत्तायां षट् निरूपिताः ॥ ६८६ ॥

शेषापूर्वानिवृत्तिसूक्ष्मशमकेषु,—४,४ । ४,५ । ९,९ । अनिवृत्तिसूक्ष्मक्षपकेषु—४,४ । ४,५ । ६,६ ।

निवृत्तबंधने[1] शान्ते सत्तायां नव भाषिताः ।
षडादिमे क्षणे ज्ञेयाश्चतस्रश्चरमे क्षणे ॥ ६८७ ॥

शान्ते—०,०।४,५।९,९ । क्षीणे—०,० । ४,५ । ६,६ । क्षीणांत्यक्षणे—०।४।४ । इति सर्वे दर्शनावरणीयस्य १३ ।

द्वाचत्वारिंशतं वेद्ये त्रयोदशयुतं शतम् ।
आयुष्याहुर्जिना भंगान् गोत्रे पंचाग्रविंशतिम् ॥ ६८८ ॥
४२ । ११३ । २५ ।

चत्वारः प्रथमाः षट्के द्वावाद्यौ सप्तके परे ।
अंत्या वेद्यस्य चत्वारो भंगा योगविवर्जिते[2] ॥ ६८९ ॥

तत्र मिथ्यादृष्टीनां प्रमत्तान्तानां षण्णां प्रत्येकं प्रथमाश्चत्वारः वेद्यस्य भंगाः—

| | | | |
|---|---|---|---|
| १ | १ | ० | ० |
| १ | ० | १ | ० |
| १० | १० | १० | १० |

---

१ गतबंधे । २ चतुर्दशमे गुणे वेद्यस्य भंगाः चत्वारः ।

इत्थं षट्के मिलिताः २४ । परत्र सप्तके प्रथमौ द्वौ द्वौ–१, १ । १, ० । १०, १० । इत्थं १४ । योगवर्जितेऽन्त्याश्चत्वारः–

| | | | |
|---|---|---|---|
| १ | ० | ० | १ |
| १० | १० | ० | १ |

इत्थं सर्वे ४२ ।

अष्टाविंशतिराद्ये षट्विंशतिः स्रस्तदर्शने ।
मिश्रे षोडश सद्दृष्टौ विंशतिः षडतः परे ॥ ६९० ॥
त्रयस्त्रयर्द्वयोर्द्वौ द्वौ चतुर्ष्वेकैककस्त्रिषु ।
शतं त्रयोदशालीढं भंगानामायुषो मतम् ॥ ६९१ ॥

मिथ्यादृष्ट्यादिषु भंगाः २८।२६।१६।२०।६।३।३।२।२।२।२।१।१।१। मिलिताः ११३ ।

भंगाः पंच नव प्रोक्ता नव पंच यथाक्रमम् ।
श्वभ्रतिर्यङ्नृदेवानामष्टाविंशतिरैक्यतः ॥ ६९२ ॥

५।९।९।५। मिलिताः २८ ।

उदितं[1] विद्यमानं च देहिन्यायुरबध्नति ।
बध्यमानोदिते ज्ञेये विद्यमाने प्रबध्नति ॥ ६९३ ॥
तत्र बद्धोदिते बद्धे विद्यमाने निवेदिते ।
ज्ञेया भंगाः क्रमादक्षैरित्थं गतिचतुष्टये ॥ ६९४ ॥

एषां संदृष्टिर्नारकेषु–

| | | | | | |
|---|---|---|---|---|---|
| बं. | ० | २ | ० | ३ | ० |
| उ. | १ | १ | १ | १ | १ |
| स. | १ | १२ | १२ | १३ | १३ |

---

१ यदा काले जीव आयुर्न बध्नाति तदाकाले देहिनि जीवे आयुः अबध्नति सति निजायुष उदयो भवति सत्त्वं च, एवं प्रथमकोष्ठकः । जीवे आयुबध्नति सति बंध उदयो भवति द्वे सत्त्वे भवतः, एकं पूर्वं सत्त्वं द्वितीयं यत् अधुना बद्धं, एवं द्वितीयकोष्ठकः ।

तिर्यक्षु इत्थम्—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ० | १ | ० | २ | ० | ३ | ० | ४ | ० |
| २ | २ | २ | २ | २ | २ | २ | २ | २ |
| २ | २१ | २१ | २२ | २२ | २३ | २३ | २४ | २४ |

देवेषु—

| | | | | |
|---|---|---|---|---|
| ० | २ | ० | | |
| ४ | ४ | ४ | ४ | ४ |
| ४ | ४२ | ४१ | [illegible] | |

मनुष्येषु—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ० | १ | ० | २ | ० | ३ | ० | ४ | ० |
| ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ |
| ३ | ३१ | ३१ | ३२ | ३२ | ३३ | ३३ | ३४ | ३४ |

मिथ्यादृष्टौ सर्वे २८ । सासनः श्वभ्रं न गच्छतीति श्वभ्रायुर्बंधे तिर्यगायुरुदये द्वयोः सत्त्वे १ । श्वभ्रायुर्बंधे मनुष्यायुरुदये द्वयोः सत्त्वे १ । इति द्वौ भंगौ त्यक्त्वा सासने शेषाः २६ । एकमप्यायुर्न बध्नाति यतो मिश्रस्ततस्तस्योपरतभंगाः[1] १६ ।

यतो बध्नाति सद्दृष्टिर्नरतिर्यग्गतिंगतः ।
देवायुरेव नान्यानि श्वभ्रदेवगतिं गतः ॥ ६९५ ॥
मर्त्यायुरेव नान्यानि भंगानामष्टकं ततः ।
विहाय विंशतिः प्रोक्ता भंगास्तस्य मनीषिभिः ॥ ६९६ ॥

तिर्यगायुर्बंधे श्वभ्रायुरुदये द्वयोः सत्त्वे १ । श्वभ्रायुर्बंधे तिर्यगायुरुदये द्वयोः सत्त्वे २ । तिर्यगायुर्बंधे तिर्यगायुरुदये सत्त्वे ३ । नरायुर्बंधे तिर्यगायुरुदये द्वयोः सत्त्वे ४ । श्वभ्रायुर्बंधे नरायुरुदये द्वयोः सत्त्वे ५ । तिर्यगायुर्बंधे नरायुरुदये द्वयोः सत्त्वे ६ । नरायुर्बंधे नरायुरुदये द्वयोः सत्त्वे ७ । तिर्यगायुर्बंधे देवायुरुदये द्वयोः सत्त्वे ८ ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| २ | १ | २ | ३ | १ | २ | ३ | २ |
| १ | २ | २ | २ | ३ | ३ | ३ | ४ |
| १२ | २१ | २२ | २२ | २१ | ३२ | ३३ | ४२ |

१ तस्य मिश्रस्य बंधं विनोपरतषोडश भंगा बंधशून्यानाम् ।

इत्थमसंयतस्याष्टौ त्यक्त्वा शेषाः २० ।

तिर्यगायुरुदयसत्त्वयोः १ । देवायुर्बन्धे तिर्यगायुरुदये द्वयोः सत्त्वे २ । तिर्यगायुरुदये तिर्यगायुर्देवायुषोः सत्त्वे ३ । नरायुरुदयसत्त्वयोः ४ । देवायुर्बन्धे नरायुरुदये द्वयोः सत्त्वे ५ । नरायुरुदये नरदेवायुषोः सत्त्वे ६ । इत्थं देशसंयतस्य सर्वे ६ ।

नरायुरुदयसत्त्वयोः २ । देवायुर्बन्धे नरायुरुदये द्वयोः सत्त्वे २ । नरायुरुदये नरदेवायुषोः सत्त्वे ३ । इत्थं प्रमत्ते सर्वे ३ ।

त एवाप्रमत्तेऽपि । अपूर्वकरणादारभ्य यावदुपशान्तांतं चतुर्णां शमकानां क्षपकानां च नरायुरुदयसत्त्वयोः १ । उपशमकानाश्रित्य नरायुरुदये नरदेवायुषोः सत्त्वे २ । इत्थं द्वाभ्यां द्वाभ्यां भंगाभ्यां चतुर्ष्वष्टौ ८ । क्षीणसयोगायोगेषु नरायुरुदयसत्त्वयोः २ । इत्थं त्रिषु त्रयः ३ । सर्वेऽप्यायुषि भंगाः ११३ ।

प्रथमे पंच चत्वारो द्वितीये त्रितये द्वयम् ।
एकैकोऽष्टसु गोत्रे द्वावंतेन्त्यौ पंचविंशतिः ॥ ६९७ ॥

गुणेषु गोत्रभंगाः ५।४।२।२।२।१।१।१।१।१।१।१।१।२ ।

उच्चोच्चमुच्चनीचं नीचोच्चं नीचनीचमिति ज्ञेयम् ।
बंधे पाके सत्त्वे द्वंद्वं सर्वं क्रमान्नीचम् ॥ ६९८ ॥

| | | | | | |
|---|---|---|---|---|---|
| बं. | १ | १ | ० | ० | ० |
| उ. | १ | ० | १ | ० | ० |
| स | १० | १० | ५० | १० | ०० |

प्रथमे प्रथमाः पंच चत्वारः सासने मताः ।
द्वौ द्वौ त्रिष्वादिमौ भंगौ पंचस्वेकैक आदिमः ॥ ६९९ ॥

मिथ्यादृष्ट्यादिषु सूक्ष्मांतेषु भंगाः ५।४।२।२।२।१।१।१।१ ।

उच्चं पाके सत्त्वे द्वितयं शान्तादिकेषु विज्ञेयम् ।
निर्बन्धकेष्वयोगे पाके सत्त्वं च पुनरुच्चम् ॥ ७०० ॥

शान्तक्षीणसयोगेषु चतुर्षु[1] चत्वारः १/१० | १/१० | १/१० | १/१० अयोगस्यांत्यक्षणे एकः १, १ । एवं गोत्रे सर्वे भंगाः २५ ।

मोहनीयस्य बंधाः कथ्यन्ते—

द्वाविंशतिः समिथ्यात्वे सासनेऽस्त्येकविंशतिः ।
द्वयोः सप्तदशैकत्र त्रयोदश नवत्रिषु ॥ ७०१ ॥
एकद्वित्रिचतुःपंचहीनाः षडनिवृत्तिके ।
क्रमतो मोहनीयस्य बंधस्थानानि संति वै ॥ ७०२ ॥
२२।२१।१७।१७।१३।९।९।९ । अनिवृत्तौ ५।४।३।२।१ ।

भंगाः कथ्यते—

षडाद्ये संति चत्वार एकविंशतिबंधके ।
परे चतुष्टये द्वौ द्वावेकैकोऽन्येषु पंचसु ॥ ७०३ ॥
६।४।२।२।२।२ । शेषेस्वेकः १ ।
संत्येकद्विचतुः पंच षट् सप्ताष्ट नव क्रमात् ।
दश च मोहनीयस्य कर्मणोऽस्य नवोदयाः ॥ ७०४ ॥
१०।९।८।७।६।५।४।२।१ ।

---

१ अयोगस्योपांत्यक्षणे ।

मिथ्यात्वं संति चत्वारः कोपाद्या वेद एककः ।
हास्यादियुग्मयोरेकं भीजुगुप्सा दशोदयाः ॥ ७०५ ॥
मिथ्यात्वदृष्टितः प्राप्ते नास्ति संयोजनोदयः ।
यावदावलिकां यस्मात्तस्मादन्यो नवोदयः ॥ ७०६ ॥
इति मिथ्यादृष्टौ द्वावुदयौ १० । ९ ।
मिथ्यात्वं सासने मिश्रद्वये चाद्याः क्रुधादयः ।
द्वितीयाः पंचमे हेयास्त्रिष्वन्येषु तृतीयकाः ॥ ७०७ ॥
सासनादिषु ९।८।८।७।६।६।६ ।
सम्यङ्मिथ्यात्वपाकेन मिश्रके मोहनोदयः ।
सम्यक्त्वस्योदयोऽन्योऽस्ति क्षयोपशमदर्शने ॥ ७०८ ॥
सम्यङ्मिथ्यात्वयोगे मिश्रे ९ ।
शामिकक्षायिके न स्तः सम्यक्त्वे द्वे यदा तदा ।
चतुर्थे पंचमे षष्ठे सप्तमेऽप्युदयः परः ॥ ७०९ ॥

सम्यक्त्वोदये यतश्चतुष्टयेऽन्योऽप्युदयो द्वितीयस्ततो द्वौ द्वावुदयौ, तत्र ९,८।८,७।७,६।७,६ ।

सम्यक्त्वस्योदयाभावे षण्णामेवोदये यतः ।
एक एव सदाऽपूर्वे ततः षट्कोदयो मतः ॥ ७१० ॥
भिया जुगुप्सया द्वाभ्यां सर्वे हीनाः क्रमाद्यतः ।
ततोऽन्येऽप्युदयास्तेषामेकैकस्योपरि त्रयः ॥ ८११ ॥

तत्र मिथ्यादृष्टौ–८,९,९,१० । ७,८,८,९ । सासने–७, ८,८,९ । मिश्रे–७।८,८।९ ।

असंयते–

| क्षायो. | औप. |
|---|---|
| ७ | ६ |
| ८८ | ७७ |
| ९ | ८ |

देशे–

| वेद. | क्षायि. |
|---|---|
| ६ | ५ |
| ७७ | ६६ |
| ८ | ७ |

प्रमत्ते–५,६,६,७।४,५,५,६। अप्रमत्ते–५,६,६,७।४,५,५,६।

सम्यक्त्वं विद्यते पूर्वे यतो जातु न वेदकम् ।
मुनिभिर्गदितं तत्र पाकस्थानत्रयं ततः । ४।५,५।६ ॥७१२॥
प्रथमे दश सप्ताद्याः सासने मिश्रके नव ।
षडाद्या नव निर्वृत्ते पंचाद्याः पंचमेऽष्ट वै ॥ ७१३ ॥
चतुराद्या द्वयोः सप्त चतुराद्याः षडष्टमे ।
द्वावेको नवमे सूक्ष्मे सदैकस्योदयो मतः ॥ ७१४ ॥
कोपाद्यन्यतमो वेदो द्वावित्थं प्रथमे क्षणे ।
गतवेदस्य तस्यैकः कोपाद्यन्यतमः परे ॥ ७१५ ॥

तत्र चतुर्णां कषायाणामन्यतमो, वेदश्चेति द्वावुदयस्थानं सवेदेऽनिवृत्तौ प्रथमे क्षणे, परेषु चतुर्षु भागेषु यथासंभवमवेद-कषायाणामेकतमः १ । इत्यनिवृत्तौ २, १ । सूक्ष्मे १ ।

सप्तोदया दशाद्या, यांति चतुर्विंशतिं स्फुटं भेदात् ।
कोपादिवेदयुग्मैः क्रमाच्चतुस्त्रिद्विभिर्वाते ॥ ७१६ ॥

इति दशाद्युदया सप्त १०।९।८।७।६।५।४। एते कषाया-दिभिर्गुणिताः प्रत्येकं चतुर्विंशतिभेदास्तेषां संख्यामाह—

दुर्दृष्टावष्ट चत्वारि द्वयोरष्ट चतुष्टये ।
अपूर्वे संति चत्वारि पाकस्थानानि मोहने ॥ ७१७ ॥
८।४।४।८।८।८।८। अपूर्वे ४ ।
अपूर्वान्ता अमी पाकाश्चतुर्विंशतिताडिताः ।
योगोपयोगलेश्याभिर्गुणनीया यथायथम् ॥ ७१८ ॥
सासने मिश्रके पूर्वे पाकाः षण्णवतिर्बुधैः ।
पंचस्वन्येषु ते प्रोक्ताः सकला द्विगुणा पुनः ॥ ७१९ ॥

इति मिथ्यादृष्ट्यादिषु पाकविकल्पाः १९२ । ९६ । ९६ । १९२ । १९२ । १९२ । ९६ । सवेदेऽनिवृत्तौ १२ । अवेदे ४ । सूक्ष्मे १ । मिलिताः १७ ।

या पाकस्थानसंख्या सा पाकभेदा निरूपिता ।
पंचषष्टियुतं तेषां शतद्वादशकं मतम् । १२६५ ॥ ७२० ॥
अष्टषष्ठिः समिथ्यात्वे द्वात्रिंशद्द्वितये मतः ।
सा षष्टिरष्टहीना सा चतुर्थे पंचमे क्रमात् ॥ ७२१ ॥
चत्वारिंशच्चतुर्युक्ताः प्रमत्तेतरयोर्द्वयोः ।
अपूर्वे विंशतिर्ज्ञेयाः पाकप्रकृतयः स्फुटम् ॥ ७२२ ॥
दशकाद्युदयानांताश्चतुर्विंशतिसंगुणाः ।
पूर्वत्र कथिता मोहे ज्ञेयाः संख्याविशारदैः ॥ ७२३ ॥

पूर्वोदितदशकाद्युदयानां प्रकृतयो मिथ्यादृष्ट्यादिषु ६८ । ३२।३२।६०।५२।४४।४४ । अपूर्वे २० । अनिवृत्तौ २१ । सूक्ष्मे १ । एताश्चतुर्विंशतिगुणा यावदपूर्वं मिथ्यादृष्टौ ८६४। ७६८ । उभयोर्मिलिताः १६३२ । सासनादिषु ७६८ । ७६०।१४४०।१२४८।१०५६।१०५६।४८० । एता मिलिता ८४४८ ।

एतदुक्तम्—

चतुःषष्ठ्या शतान्यष्टावष्टषष्ठ्यात्र सप्त च ।
मिथ्यादृष्टौ शतान्यैक्ये द्वात्रिंशानीति षोडश । १६३२॥७२४॥
मिश्रसासनयोः सप्त साष्टा षष्ठीन्यसंयते ।
चत्वारिंशानि विद्वांस शतान्याहुश्चतुर्दश ॥ ७२५ ॥

७६८ ! ७६८ । १४४० ।

विना पंचाशतं द्व्यग्रां तानि देशे त्रयोदश ।
षष्ठसप्तमयोर्ज्ञेयं षट्पंचाशं सहस्रकम् ॥ ७२६ ॥
१२४८ । १०५६ । १०५६ ।
अपूर्वेऽशीतिसंयुक्तं ज्ञेयं शतचतुष्टयम् ।
पंचाशीतिशतान्येके स्युर्द्वापंचाशतं विना ॥ ७२७ ॥
अपूर्वे ४८४ ।
सर्वाः पदबंधाख्याः प्रकृतयः ८४४८ ।
अनिवृत्तेर्भंगाः कथ्यन्ते—
वेदसंज्वलनाभ्यासे द्वादश स्युर्द्विकोदयाः ।
एकोदयास्तु चत्वारः संज्वालान्यतमोदये ॥ ७२८ ॥
एकः सूक्ष्मे भवत्येवं द्वये सप्तदशोदयाः ।
एकोनत्रिंशदैक्ये ते द्वाभ्यामभ्यसने सति ॥ ७२९ ॥

सवेदेऽनिवृत्तौ द्विकोदयाः १२ । अवेदे त्वेकोदयाः ४ । सूक्ष्मलोभे एकः १ । सर्वे मिलिताः १७ । द्वाभ्यामभ्यसने[1] द्विकोदयेषु प्रकृतयः २४ । एकोदये ४ । सूक्ष्मे १ । पिंडिताः २९ । पदबंधाख्याः प्रकृतयः ।

पाकप्रकृतिसंख्यायाः पदबंधा भवंति ते ।
पंचाशीतिशतान्याहुस्तां त्रयोविंशतिं विना । ८४७७॥७३०॥
ये भवंति गुणे यत्र पाकाः प्रकृतयश्च याः ।
योगोपयोगलेश्याभिस्ते गुण्यास्ताश्च यत्नतः ॥ ७३१ ॥
त्रयोदश द्वयोर्योगा दशान्यत्र त्रयोदश ।
नवैकादश ते षट्के नव सप्त च योगिनि ॥ ७३२ ॥

---

१ गुणने ।

गुणेषु योगाः १३।१३।१०।१३।९।११।९।९।९।९।९।९।७।०। गुणेषु पाकभेदाः पूर्वोदिता मिथ्यादृष्टौ ९६। ९६। सासनादिषु ९६।९६।१९२।१९२।१९२।१९२।९६। अनिवृत्तौ १२।४। सूक्ष्मे १। इति द्वयोः १७।

मिश्रो वैक्रियिको योगः स तथौदारिकोऽगिनि।
कार्मणश्च त्रयो नैते मिथ्यात्वं दृष्टितो गते ॥ ७३३ ॥
त्रयोदश ततो योगा मिथ्यादृष्टौ दशाथवा।
सासने द्वादश प्रोक्ता द्वयोर्दश नवापरे ॥ ७३४ ॥
एकत्रैकादश ज्ञेया नव योगा द्वयोस्ततः।
पाकप्रकृतयः पाकास्तैरभ्यस्या यथायथम् ॥ ७३५ ॥

मिथ्यादृष्टौ योगाः १३।१०। सासनादिषु १२।१०।१०।९।११।९।९। योगैः षण्णवत्यादयः पाकविकल्पाः पूर्वोदिता गुणिता मिथ्यादृष्टौ १२४८।९६० पिंडिताः २२०८। सासनादिषु ११५२।९६०।१९२०।१७२८।२११२।१७२८।८६४। पिंडिताः १२६७२।

न श्वभ्रं सासनो याति मिश्रवैक्रियिके यतः।
षंढवेदो न तस्यास्ति ततस्तत्र कदाचन ॥ ७३६ ॥
वेदकोपादियुग्मोत्थैर्भंगैः षोडशभिस्ततः।
चतुःषष्टिर्मताः पाकाश्चत्वारो गुणिताः परे। ६४ ॥ ७३७ ॥
षंढो वैक्रियिके मिश्रे नरके त्रिदिवे पुमान्।
पुमानौदारिके मिश्रे जायते नृष्वसंयतः ॥ ७३८ ॥
भंगैः षोडशभिर्गुण्या वेदकोपादियुग्मकैः।
कर्मवैक्रियमिश्राभ्यां निर्व्रतोष्टोदयस्तथा ॥ ७३९ ॥

पुंनपुंसकवेदद्वयकषायचतुष्कहास्यादियुग्मानामन्योन्याभ्यासे भंगाः १६। एतैरष्टोदया हताः १२८। वैक्रियिकमिश्रकार्मणयोगाभ्यां हताः २५६।

युग्मैकवेदकोपादिभंगैरष्टभिराहताः।
अष्टावौदारिके मिश्रे चतुःषष्ठिसदाहृताः॥ ७४०॥

युग्मैकवेदकोपादीनामन्योन्यवधे भंगाः ८। एतेऽष्टोदयहताः ६४। औदारिकमिश्रहताः ६४।

एवमसंयते पूर्वैः सहोदयविकल्पाः परे ३२०।
नवमे दशमे पाकाः पूर्वं सप्तदशोदिताः।
योगैर्नवभिरभ्यस्तास्त्रिपंचाशं शतं मतम्॥ ७४१॥

सवेदेऽनिवृत्तौ वेदाः ३। संज्वलनाः ४। परस्परबंधे द्विकोदयाः १२। नवयोगहताः १०८। निर्वेदे शेषेषु पंचमभागेषु चतुर्षु संज्वालान्यतमोदयाः ४। योगनवकगुणिताः ३६। द्वयेऽप्यनिवृत्तौ मिलिताः १४४। सूक्ष्मे सूक्ष्मलोभसंज्वालस्यैकस्योदयः १। नवभिर्योगैर्गुणिताः ९। इत्थं सर्वे पिंडिताः १५३।

मोहनोदयभंगा ये योगानाश्रित्य मेलिताः।
नवोत्तरशते ते द्वे सहस्राणि त्रयोदश॥ १३२०। ७४२॥

साम्प्रतं पदबंधा योगानाश्रित्य कथ्यन्ते—

तत्र मिथ्यादृष्टयादिषु पूर्वोदितैर्योगैरेतैः १३। १०। सासनादिषु १२।१०।९।९।११।९।९। क्रमादेताः प्रकृतयः पूर्वोदिता मिथ्यादृष्टौ ८६४। ७६८। सासनादिषु ७६८।

७६८।१४४०।१२४८।१०५६।१०५६।४८० । गुणिता जाता मिथ्यादृष्टौ ११२३२।७६८०। सासनादिषु ९२१६।७६८०। १४४०।११२३२।११६१६।९५०४।४३२०।

पाकप्रकृतयः संति चतुर्विंशतिभंगजाः ।
षडशीतिसहस्राणि साशीति च शताष्टकम् ॥ ७४३ ॥

८६८८० ।

द्वात्रिंशत्षोडशाभ्यस्ताः पाकप्रकृतयः स्फुटम् ।
सह द्वादशभिर्ज्ञेयं सासने शतपंचकम् ॥ ७४४ ॥

सासने चत्वारः पाकाः ७,८,८,९ । एवं प्रकृतयः ३२ । पूर्वोदितैः षोडशत्रिभंगैर्गुणयित्वा वैक्रायिकमिश्रयोगबंधेऽन्येपिपदबंधाः ५१२ ।

पाकाष्टकगता षष्टिःप्रकृतीनामसंयते ।
हताः षोडशभिर्भंगैर्वेदकोपादियुग्मजैः ॥ ७४५ ॥
कर्मवैक्रियमिश्राभ्यां योगाभ्यां ताडिता सती ।
सहस्रं नव विंशानि शतानि च भवंति ताः ॥ ७४६ ॥

असंयतेऽष्टोदयाः ७,८,८,९ । ६,७,७,८ । एषां प्रकृतयः ६० । षोडशभंगगुणिताः ९६० । वैक्रियिकमिश्रकार्मणयोगाभ्यां हताः १९२० ।

पाकप्रकृतयो भंगैरष्टषष्टिभिराहताः ।
निहतौदारिकामिश्रेण सहाशीत्या चतुःशती ॥७४७॥

असंयतेऽन्येप्यौदारिकमिश्रयोगे भंगाः ४८० । एवं निर्वृते योगत्रये अन्येपि मिलिताः पदबंधाः २४०० ।

---

१ ‘ अष्ट ’ इति स्वकल्पितपाठः ।

एकोनत्रिंशदभ्यस्ता नवमे दशमे च ताः ।
योगैर्नवभिरादिष्टं सैकषष्टिशतद्वयम् ॥ ७४८ ॥

नवमे उदये २ । द्वादशभिर्द्विकोदयैर्घाते २४ । चतुर्भिरेकोदयैः १।४। सर्वाः २८ सूक्ष्मे एकोदयः १ । मिलिताः २९। एता नवभिर्योगैरभ्यस्ता २६१ ।

पदबंधाः मताः सर्वे मिलिता मोहकर्मणि ।
नवतिः स्युः सहस्राणि त्रिपंचाशानि निश्चितम् ॥ ७४९ ॥

इति मोहे योगानाश्रित्य गुणेषु पदबंधाः ९००५३ ।

गुणस्थानेषु ये पाका पदबंधाश्च संति ये ।
उपयोगैर्हता ज्ञेयास्ते निःशेषा विचक्षणैः ॥ ७५० ॥
द्वयोः पंच क्रमेणैते त्रिषु षट् सप्त सप्तसु ।
द्वयोर्द्वावयबोद्धव्या गुणस्थानेषु कोविदैः ॥ ७५१ ॥

गुणेषूपयोगाः ५।५।६।६।६।७।७।७।७।७।७।७।२।२। गुणेष्वष्टसु पाकविकल्पाः १९२।९६।९६।१९२।१९२।१९२। १९२।९६। नवमे १२।४ दशमे १ । द्वयोः १७ ।

उपयोगगुणा एते एतावंतो निवेदिताः ।
उपयोगं प्रति प्राज्ञैः पाकभेदा यथागमम् ॥ ७५२ ॥

९६०।४८०।५७६।११५२।११५२।१३४४।१३४४।६७२। मिलिताः ७६८० ।

नवमे दशमे पाकाः पूर्वं सप्त दशोदिताः ।
उपयोगगुणाः संति शतं सैकोनविंशति ॥ ७५३ ।

११९ । मिलिताः ७७९९ ।

भेदा मोहनपाकानामुपयोगहता मताः ।
ऐक्ये नवनवत्यामा शतानां सप्तसप्ततिः ॥ ७५४ ॥

गुणस्थानाष्टके संति पाकप्रकृतयो यकाः ।
उपयोगैः क्रमादेताः पदबंधा हता मताः ॥ ७५५ ॥

गुणेष्वष्टसु पाकप्रकृतयः १६३२।७६८।७६८। १४४०। १२४८।१०५६।१०५६।४८०। एताः यथास्वमुपयोगगुणाः पदबंधाः ८१६०।३८४०।४६०८।८६४०।७४८८।७३९२। ७३९२।३३६०। मिलिताः ५०८८० ।

सूक्ष्मानिवृत्तिकस्थानपाकप्रकृतयो हताः ।
सप्तकेनोपयोगानां त्र्युत्तरे द्वे शते मते ॥ ७५६ ॥

द्वयोः पाकप्रकृतयः २९ । उपयोगसप्तकहताः २०३ ।

उपयोगगताः सर्वे पदबंधा निरूपिताः ।
सहस्राण्येकपंचाशत्सत्र्यशीतीनि सूरिभिः ॥ ७५७ ॥

५१०८३ ।

लेश्याश्चतुष्टये षट् षट् तिस्रस्तिस्रस्त्रये शुभाः ।
एकैकास्ति गुणानां सा षट्के निर्लेश्यमंतिमम् ॥ ७५८ ॥

६।६।६।६।३।३।३।१।१।१।१।१।१।० । अष्टसु गुणस्थानेषु पाकविकल्पाः १९२।९६।९६।१९२।१९२।१९२।१९२।९६ । एते यथाक्रमं लेश्यागुणाः लेश्यासु पाकभेदाः—११५२।५७६। ५७६।११५२।५७६।५७६।५७६।९६ । अनिवृत्तिसूक्ष्मयोरुदयाः १७ । शुक्ललेश्यागुणाः १७ । सर्वे पिंडिताः ५२९७ ।

त्रिहीनानि त्रिपंचाशच्छतान्येवं गुणेषु वै ।
लेश्यापाकविकल्पानां भवंत्येकत्र मोहने ॥ ७५९ ॥

गुणाष्टके पदबंधे पाकप्रकृतयः १६३२।७६८।७६८।१४४०।१२४८।१०५६।१०५६।४८० । यथाक्रमं लेश्याहताः पदबंधा आगताः ९७९२।४६०८।४६०८।८६४०।३७४४।

३१६८।३१६८।३१६८।४८० । मिलिताः ३८२०८ । नवमदशमयोः पाकप्रकृतयः २१ । शुक्ललेश्याहताः २९ । सर्वे मिलिताः ३८२३७ ।

संति लेश्याहताः सर्वे पदबंधा विसंशयम् ।
अष्टत्रिंशत्सहस्राणि सप्तत्रिंशं शतद्वयम् ॥ ७६० ॥
मोहनीयोदया ह्येताः समस्ता वेदताड़िता ।
गुणस्थानाष्टकैर्याश्च चतुर्विंशतिसंगुणाः ॥ ७६१ ॥

मिथ्यादृष्ट्यादिस्वष्टसूदयाः ८।४।४।८।८।८।८।४ । एते त्रिवेदताड़िताः २४।१२।१२।२४।२४।२४।२४।१२ । चतुर्विंशतिसंगुणाः ५७६।२८८।२८८।५७६।५७६।५७६।५७६।२८८। सर्वैक्ये ३७४४ । अनिवृत्तौ संज्वाला वेदत्रयगुणाः १२ ।

वेदैस्तु त्रिभिरभ्यस्ताः संज्वाला अनिवृत्तिके ।
सप्तत्रिंशच्छतान्याहुः षट्पंचाशीनि मेलने ॥ ७६२ ॥

पाकस्थानानि । एवं ३७५६ ।

पाकप्रकृतयः सर्वाः वेदत्रयहता मताः ।
गुणस्थानाष्टके मोहे चतुर्विंशतिताड़िताः ॥ ७६३ ॥

६८।३२।३२।६०।५२।४४।४४।२० । त्रिवेदे गुणाः २०४। ९६।९६।१८०।१५६।१३२।१३२।६० । चतुर्विंशतिताड़िताः ४८९६ । २३०४ । २३०४।४३२०।३७४४।३१६८।३१६८। १४४० । मिलिताः २५३४४ । अनिवृत्तौ संज्वालाः ४ । प्रकृतिद्वयगुणाः ८ । त्रिवेदगुणाः २४ ।

अनिवृत्तिस्थसंज्वालाः प्रकृतिद्वयसंगुणाः ।
वेदैस्त्रिभिरभ्यस्ता मेलनीया विचक्षणैः ॥ ७६४ ॥

शतत्रयाष्टषष्टिश्च सहस्रा पंचविंशतिः ।
पदसंख्या विबोद्धव्या त्रिवेदी प्रति मोहने ॥ ७६५ ॥
२५३६८ ।
त्रिसंयमगुणाः पाकाः षष्ठसप्तमयोर्मताः ।
अपूर्वे गुणिता द्वाभ्यां सर्वे तीर्थकरैर्हताः ॥ ७६६ ॥

षष्ठसप्तमयोरुदयाः ८।८ । संयमत्रयहताः २४।२४ । अपूर्वे पाकाः ४ । द्विसंयमगुणाः ८ । चतुर्विंशतिगुणाः सर्वे ५७६। ५७६।१९२ । सर्वैक्ये १३४४ ।

षोडशैकस्तथा पाकाः संयमे गुणिताः क्रमात् ।
अनिवृत्तौ तथा सूक्ष्मे द्वाभ्यामेकेन कोविदैः ॥ ७६७ ॥

अनिवृत्तावुदयाः १६ । संयमद्वयगुणाः ३२ । सूक्ष्मे पाकाः २ । एकसंयमगुणे मिलिताः ।

सप्तसप्ततियुक्तानि त्रयोदश शतानि ते ।
विकल्पाः संति पाकानां संयमं प्रति मोहने ।१३७७॥७६८॥
षष्ठसप्तमयोः पाकास्त्रिभिर्द्वाभ्यां च संयमैः ।
हत्वा प्रकृतिसंघातांस्ताडयेत्तीर्थकारिभिः ॥ ७६९ ॥

प्रमत्ताप्रमत्तयोः पदबंधाः ४४।४४ । संयमत्रयाभ्यस्ताः १३२।१३२ । अपूर्वे पदबंधाः २० । द्विसंयमगुणाः ४० । चतुर्विंशति गुणाः ३१६८।३१६८।९६० । सर्वैक्ये ७२९६ ।

द्वयं द्वादशभिर्हत्वा चतुर्भिरेककं पुनः ।
संयमद्वितयाभ्यस्ता विधेयमनिवृत्तिके ॥ ७७० ॥

अनिवृत्तौ द्वौ द्वौ द्वादशगुणौ २४ । एकश्चतुर्गुणः ४ । द्वावपि द्विसंयमगुणौ ५६ । एकः सूक्ष्मे १ । एकसंयमगुणः १ ।

चतुर्थे संयमेनैको हन्यात्सूक्ष्मकषायके ।
त्रिसप्ततिशतान्याहुस्त्रिपंचाशीनि मेलिताः ॥ ७७१ ॥
७३५३ ।
चतुर्थादिगुणैः पाकाः सम्यक्त्वैस्त्रिभिराहताः ।
द्वाभ्यां पुनरपूर्वाख्ये हंतव्याः पाकवेदिभिः ॥ ७७२ ॥
चतुर्विंशतिघ्नाः सर्वे कार्याः प्रकृतिवेदिभिः ।
अनिवृत्तौ तथा सूक्ष्मे सम्यक्त्वद्वयताडिताः ॥ ७७३ ॥

असंयतादिगुणचतुष्टये उदये ८।८।८।८ । त्रिसम्यक्त्वाभ्यस्ताः २४।२४।२४।२४ । अपूर्वे पाकाः ४ । सम्यक्त्वद्वयाभ्यस्ताः ८ । सर्वे चतुर्विंशतिगुणाः ५७६।५७६।५७६।५७६।१९२ । एते मिलिताः २४९६ । अनिवृत्तिसूक्ष्मयोः पाकाः १७ । द्विदर्शनगुणाः ३४ । सर्वे मिलिताः—

त्रिंशदभ्यधिका ज्ञेया शतानां पंचविंशतिः ।
पाकभंगाः विबोद्धव्याः सम्यक्त्वं प्रति मोहने ।२५३०॥७७४॥
सद्दृष्ट्यादिगुणस्थानचतुष्के ताडितास्त्रिभिः ।
चतुर्विंशतिविध्वस्ताः कर्त्तव्याः सकला बुधैः ॥ ७७५ ॥

गुणस्थानचतुष्टये पाकप्रकृतयः ६०।५२।४४।४४ । सम्यक्त्वत्रयगुणाः १८०।१५६।१३२।१३२ । अपूर्वे उदयप्रकृतयः २० । दर्शनद्वयाभ्यस्ताः ४० । सर्वाश्चतुर्विंशतिभंगघ्नाः ४३२०।३७४४।३१६८।३१६८।९६० । सर्वैक्ये १५३६० ।

अनिवृत्तौ तथा सूक्ष्मे पाकप्रकृतयो बुधैः ।
सम्यक्त्वद्वितयाभ्यस्ताः कर्तव्याःबुद्धिशालिभिः ॥ ७७६ ॥

अनिवृत्तिसूक्ष्मयोः पाकप्रकृतयः २९ । दर्शनद्वयगुणाः ५८ ।

अष्टादशाधिकं ज्ञेयं बुधैः शतचतुष्टयम् ।
तथा पंचदश ज्ञेयाः सहस्राः मिलिते सति ॥ ७७७ ॥
१५४१८ ।

ये मोहनीये पदबंधपाक-
त्रयोपयोगैः क्रमतः सलेश्यैः ।
निघ्नंति निर्मूलितमोहबंधा-
स्ते यांति सद्योऽमितगत्यभीष्टम् ॥ ७७९ ॥

इत्यमिगत्याचार्यवर्यप्रणीते पंचसंग्रहे मोहपाकस्थान-
प्ररूपणा समाप्ता ।

---

गुणेषु मोहसत्त्वस्थानान्याह—
त्रीण्येकं द्वे क्रमात्पंच सत्त्वे गुणचतुष्टये ।
त्रीणि स्युर्दश चत्वारि त्रीणि स्थानानि मोहने ॥ १ ॥
क्रमादेकादशगुणेषु—३।१।२।५।५।५।५।३।१०।४।३ ।
अष्टसप्तषडग्रास्ति विंशतिः प्रथमे ततः ।
परे विंशतिरष्टाग्रा मिश्रे साष्टचतुर्युता ॥ २ ॥
मिथ्यादृष्टौ २८।२७।२६ । सासने २८ । मिश्रे २८।२४ ।
क्रमतोष्टचतुस्त्रिद्वियुक्ता सैका च विंशतिः ।
पंच स्थानानि जायंते सत्त्वे गुणचतुष्टये ॥ ३ ॥
चतुर्थपंचमषष्ठसप्तमेषु चतुर्षु पंच २८।२४।२३।२२।२१ ।
सैवाष्टचतुरेकाग्रा, स्थानानां शमके त्रयम् ।
अपूर्वे क्षपके सैका विंशतिः कथिता परम् ॥ ४ ॥
अपूर्वस्य शमके २८।२४।२१ । क्षपके २१ ।

सैवाष्टचतुरेकाग्रा सैकाग्रा नवमे दश ।
सत्रिद्व्येका क्रमात्पंच चत्वारस्त्रिद्वयो मताः ॥ ५ ॥

अनिवृत्तेः शमके २८।२४।२१ । अनिवृत्तेः क्षपके २१ । १३।१२।११।५।४।३।२ ।

सूक्ष्मेषु चतुरेकाग्रां विंशतिं क्रमतो विदुः ।
एकं च क्षपके तस्य त्रयं शान्ते पुरातनम् ॥ ६ ॥

सूक्ष्मस्य शमके २८।२४।२१ । क्षपके १ । शांते २८।२४।२१ ।

इत्थं मोहसत्ताप्ररूपणा समाप्ता ।

---

बंधादित्रितयं नाम्नो गुणानां दशके क्रमात् ।
पाकसत्त्वद्वयं योज्यं परे तस्माच्चतुष्टये ॥ ७ ॥
बंधे पाके क्रमात्सत्त्वे स्युः षट् नव षडादिमे ।
सासने त्रीणि सप्तैकं द्वे त्रीणि द्वे च मिश्रके ॥ ८ ॥
निर्व्रते त्र्यष्टचत्वारि द्विद्विचत्वारि पंचमे ।
षष्ठे द्विपंचचत्वारि चत्वार्येकं चतुष्टयम् ॥ ९ ॥
सप्तमेऽपूर्वके पंच ज्ञेयमेकं चतुष्टयम् ।
एकमेकं क्रमादष्ट गुणस्थानद्वये ततः ॥ १० ॥
एकं चत्वारि शांताख्ये क्षीणे चोदयसत्त्वयोः ।
त्रयोदशे द्विचत्वारि द्वे षट्कं च चतुर्दशे ॥ ११ ॥

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| बं. | ६ | ३ | २ | ३ | २ | २ | ४ | ५ | १ | १ | ० | ० | ० | ० |
| उ. | ९ | ७ | ३ | ८ | २ | ५ | १ | १ | १ | १ | १ | १ | २ | २ |
| स | ६ | १ | २ | ४ | ४ | ४ | ४ | ४ | ८ | ८ | ४ | ४ | ४ | ६ |

षडादितः समिथ्यात्वे बंधपाके नवादितः ।
षट् स्थानान्यादितः सत्त्वे संति त्रिनवतिं विना ॥ १२ ॥

बंधे २३।२५।२६।२८।२९।३० । पाके २१।२४।२५।२६। २७।२८।२९।३०।३१ । सत्त्वे ९२।९१।९०।८८।८४।८२ ।

चतुस्त्रिद्विच्युता बंधे द्वात्रिंशत्सप्त सासने ।
सप्ताष्टाग्रे विना पाके विंशती नवतिः सती ॥ १३ ॥

बंधे २८।२९।३० । पाके २१।२४।२५।२६।२९।३०।३१ । सासनस्तीर्थकराहारकद्वयसत्कर्मा न भवतीति ९० ।

मिश्रे साष्टनवा बंधे सैकादश दशोदये ।
सनवा विंशतिद्व्यग्रा नवतिः सा तथा सती ॥ १४ ॥

बंधे २८।२९ । पाके २९।३०।३१ । सत्त्वे ९२।९० ।

चतुस्त्रिद्विच्युता बंधे द्वात्रिंशदादितोऽव्रते ।
द्वितीयोनानि पाकेऽष्ट सत्त्वेऽस्त्याद्यं चतुष्टयम् ॥ १५ ॥

बंधे २८।२९।३० । पाके २१।२५।२६।२७।२८।२९।३०। ३१ । सत्त्वे ९३।९२।९१।९० ।

नवाष्टसहिते बंधे विंशती पंचमे मते ।
त्रिंशत्सैका च सा पाके सच्चतुष्टयमादिमम् ॥ १६ ॥

बंधे २८।२९ । पाके ३०।३१ । सत्त्वे ९३।९२।९१।९० ।

बंधे साष्टनवा षष्ठे प्रथमं सच्चतुष्टयम् ।
पंचत्रिद्व्येकनिर्मुक्ता त्रिंशत्सा च मतोदये ॥ १७ ॥

बंधे २८।२९ । पाके २५।२७।२८।२९।३० । सत्त्वे ९३।९२।९१।९० ।

चतुस्त्रिद्व्येकसंत्यक्ता बंधे द्वात्रिंशदीरिता ।
उदये सप्तमे त्रिंशदादिमं सच्चतुष्टयम् ॥ १८ ॥

बंधे २८।२९।३०।३१ । पाके ३० । सत्त्वे ९३।९२।९१।९०।

शमके क्षपकेऽपूर्वे बंधेऽन्त्यस्थानपंचकम् ।
उदये जायते त्रिंशत्पूर्वं सत्त्वे चतुष्टयम् ॥ १९ ॥

बंधे २८।२९।३०।३१।१ । पाके ३० । सत्त्वे ९३।९२। ९१।९० ।

सप्तमेऽन्त्यक्षणेऽपूर्वो नवमो दशमस्त्रयः ।
वध्नंत्येकं यशः शेषाश्चत्वारः संत्यबंधकाः ॥ २० ॥

१।१।१।०।०।०।० ।

अष्टमादित्रये शांते क्षीणे त्रिंशन्मतोदये ।
त्रिंशत्सैका च सा योगयुक्ते योगे नवाष्ट च ॥ २१ ॥

अपूर्वादिषु पंचसु पाके ३०।३०।३०।३०।३० । सयोगे उदये ३० । ३१ । अयोगे उदये ९ । ८ ।

शमकत्रितये शांते क्षपकाणामपूर्वके ।
षोडशप्रकृतिध्वंसमकुर्वत्यनिवृत्तिके ॥ २२ ॥
चतुष्कं प्रथमं सत्त्वे परतोऽतः क्षणाष्टके ।
नवमे दशमे क्षीणे सयोगे योगवर्जिते ॥ २३ ॥
चतुष्टयमशीत्यादिनिर्योगांत्यक्षणे परम् ।
ज्ञेया नव दश प्राज्ञैरिति नाम प्ररूपितम् ॥ २४ ॥

तत्रोपशमश्रेण्यामपूर्वादीनां चतुर्णांक्षपकाणामपूर्वेऽनिवृत्ति-प्रथमनवांशे च । सत्त्वे ९३।९२।९१।९० । अनिवृत्तिक्षपक-शेषनवांशेष्वष्टसु सूक्ष्मक्षीणसयोगनिर्योगोपांतिमक्षणेषु च । सत्त्वे ८०।७९।७८।७७ । निर्योगांत्यक्षणे १० । ९ ।

एवं नामप्ररूपणा समाप्ता ।

---

मार्गणां प्रति बंधादित्रयं कथ्यन्ते—

बंधे पाके सत्त्वे द्वे पंच त्रीणि संति नरकेषु ।
षट् नव पंच त्रितये संति स्थानानि तिर्यक्षु ॥ २५ ॥
अष्टादश द्वादश च त्रितये स्थानानि संति मानुष्ये ।
चत्वारि पंच चत्वारि त्रिदिवे तत्र जायंते ॥ २६ ॥

तदित्थं—

| | | | | |
|---|---|---|---|---|
| बं. | २ | ६ | ८ | ४ |
| उ. | ५ | ९ | १० | ५ |
| स. | ३ | ५ | १२ | ४ |

नवदशसहिता बंधे नरके विंशतिरुदाहृता पाके ।
एषैकपंचसप्ताष्टनवाग्रा जायते तत्र ॥ २७ ॥
एकद्वित्रिपरित्यक्ता तत्र त्रिनवतिः सती ।
उक्त्वा बंधादिकं श्वभ्रे तिर्यक्षु कथयाम्यतः ॥ २८ ॥

श्वभ्रे बंधे २९।३० । उदये २१।२५।२७।२८।२९ । सत्त्वे ९२।९१।९० ।

आद्यानि तत्र षड्बंधे नवाद्यान्युदये विदुः ।
त्र्येकाग्रे नवती सत्त्वे सप्ताद्यानि विना क्रमात् ॥ २९ ॥

तिर्यक्षु बंधे २३।२५।२६।२८।२९।३० । पाके २१।२४।२५।२६।२७।२८।२९।३०।३१ । तीर्थकृत्सत्कर्मा तिर्यक्षु न यातीति तेन विना सत्त्वे ९२।९०।८८।८४।८२ ।

सर्वे बंधे नृत्त्वे क्रमाच्चतुर्विंशतिं विना पाकाः ।
सत्त्वे द्व्यशीत्यूनस्थानान्याखिलानि जायंते ॥ ३० ॥

नृत्वे बंधाः २३।२५।२६।२८।२९।३०।३१।१ । पाकाः २१।२५।२६।२७।२८।२९।३०।३१।९।८ । सन्ति[१] ९३।९२।

१ सत्वस्थानानि ।

९१।९०।८८।८४।८०।७९।७८।७७।१०।९ ।

बंधे पंचषडग्रा नवदशयुक्ता च विंशतिः स्वर्गे ।
सा सैकपंचसप्ताष्टनवपाके विनिर्दिष्टा ॥ ३१ ॥
सत्त्वे प्रथमचतुष्कं बंधादित्रितयमुक्तमिति नाके ।
इदमिन्द्रियेस्विदानीं कथयामि यथागमं ज्ञात्वा ॥ ३२ ॥

स्वर्गे बंधे २५।२६।२९।३० । पाके २१।२५।२७।२८।२९ । सत्तायां ९३।९२।९१।९० ।

एकाक्षे त्रितये पंच विकलत्रितये मताः ।
पंच षट् पंच पंचाक्षे त्वष्टौ दश त्रयोदश ॥ ३३ ॥

तदित्थम्—

| | ए. | वि. | पं. |
|---|---|---|---|
| बं. | ५ | ५ | ८ |
| उ | ५ | ६ | १० |
| स. | ५ | ६ | १३ |

बंधे त्रिपंचषट्नवदशयुक्ता विंशतिर्मतैकाक्षे ।
पाकाः पंच प्रथमाः प्रथमतृतीये विना संति ॥ ३४ ॥

स्थानानीति शेषः । बंधे २३।२५।२६।२९।३० । पाकाः २१।२४।२५।२६।२७ । संति ९२।९०।८८।८४।८२ ।

एकेन्द्रियवद्बंधे सत्त्वे विकलत्रये प्रजायंते ।
एकषडष्टनवदशैकादशयुग्विंशतिः पाके ॥ ३५ ॥

बंधे २३।२५।२६।२९।३० । पाकाः २१।२६।२८।२९। ३०।३१ । सत्त्वे ९२।९०।८८।८४।८२ ।

बंधे सत्त्वे जीवे सर्वस्थानानि संति पंचाक्षे ।
तानि चतुर्विंशत्या पाके हीनानि जायंते ॥ ३६ ॥

बंधे २३।२५।२६।२८।२९।३०।३१।१ । पाके २१।२५।

२६।२७।२८।२९।३०।३१।१।८ । सत्त्वे ९३।९२।९१।९०।
८८।८४।८२।८०।७९।७८।७७।१०।९ ।

सर्वासु मार्गणास्वेवं सत्संख्याद्यष्टकेऽपि च ।
बंधादित्रितयं नाम्नो योजनीयं यथागमम् ॥ ३७ ॥
न चत्वारिंशतं सैकं परित्यज्यान्यकर्मणाम् ।
पाकोदीरणयोरस्ति विशेषः स्वाम्यतः स्फुटम् ॥ ३८ ॥
मिश्रसासादनापूर्वशांतायोगान् विमुच्य सा ।
योजनीया गुणस्थाने विभागेन विचक्षणैः ॥ ३९ ॥

एकचत्वारिंशत्प्रकृतयो गुणस्थानं प्रति दीयन्ते—

मिथ्यात्वं तत्र दुर्दृष्टौ तुर्ये श्वभ्रसुरायुषी ।
तैरश्चं जीवितं देशे षडेताः सप्रमादके ॥ ४० ॥
सातासातमनुष्यायुस्त्यानगृद्धित्रयाभिधाः ।
सम्यक्त्वं सप्तमे वेदत्रितयं त्वनिवृत्तिके ॥ ४१ ॥
लोभः संज्वलनः सूक्ष्मे क्षीणाख्ये दृक्चतुष्टयम् ।
दश ज्ञानांतरायस्था निद्राप्रचलयोर्द्वयम् ॥ ४२ ॥
त्रसपंचाक्षपर्याप्तबादरोच्चनृरीतयः ।
तीर्थकृत्सुभगादेययशांसि दश योगिनि ॥ ४३ ॥

१।०।०।२।१।६।१।०।३।१।०।१६।१०।०। मिलिताः ४१।

त्रिभिर्विरहितं तीर्थकर्तृत्वाहारकद्विकैः ।
स्वीकरोति समिथ्यात्वः शतं सप्तदशोत्तरम् ॥ ४४ ॥
सासनः शतमेकाग्रं चतुर्भिः सप्तभिर्युताम् ।
सप्ततिं मिश्रनिर्वृत्तौ सप्तभिस्त्रिभिरन्विताम् ॥ ४६ ॥
षड्विंशतिं च गृह्णाति ततो द्वाविंशतिं परः ।
एकद्वित्रिचतुर्न्यूनामेतां संयमपंचके ॥ ४७ ॥

सूक्ष्मः सप्तदशैकस्य शान्तक्षीणाख्ययोगिनाम् ।
सातस्य कर्मणो बंधो निर्योगो बंधवर्जितः ॥ ४८ ॥

तीर्थकराहारकद्वयहीना मिथ्यादृष्टौ–१६,११७,३,३१ । सासने–२५,१०१,१९,४७ । मर्त्यदेवायुषी विना मिश्रे–०,७४,४६,७४ । तीर्थकरमर्त्यदेवायुर्भिः सहासंयते–१०,७७,४३,७१ । देशे–४,६७,५३,८१ । प्रमत्ते–६,६३,५७,८५ । आहारकद्विकेन सहाप्रमत्ते–१,५९,६१,८९ ।

अपूर्वे सप्तसु भागेषु–

| | | | | | | |
|---|---|---|---|---|---|---|
| २ | ० | ० | ० | ० | ३० | ४ |
| ५८ | ५६ | ५६ | ५६ | ५६ | ५६ | २६ |
| ६२ | ६४ | ६४ | ६४ | ६४ | ६४ | ९४ |
| ९० | ९२ | ९२ | ९२ | ९२ | ९२ | ११२ |

अनिवृत्तौ पंचसु भागेषु–

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| २२ | २१ | २० | १९ | १८ |
| ९८ | ९९ | १०० | १०१ | १०२ |
| १२६ | १२७ | १२८ | १२९ | १३० |

सूक्ष्मे–१६,१७,१०३,१३१ । शांते–०,१,११९,१४७ । क्षीणे–०,१,११९,१४७ । सयोगे–१,१,११९,१४७ । निर्योगे–०,०,१२०,१४८ ।

प्रकृतीनामतो योज्यं स्वाम्यं गतिचतुष्टये ।
सामान्येन पटोयोभिः पर्यालोच्य यथागमम् ॥ ४९ ॥
तीर्थकृच्छ्वभ्रदेवायुस्त्रयं रीतित्रये स्मृतम् ।
पराः प्रकृतयः संति सर्वा रीतिचतुष्टये ॥ ५० ॥
तीर्थकृत्त्वं न तिर्यक्षु श्वभ्रायुस्त्रिदशेषु नो ।
नारकेषु न देवायुः संत्यन्याः सर्वरीतिषु ॥ ५१ ॥

चतुष्टयं कषायाणामादिमं दर्शनत्रयम् ।
शांता निर्व्रतमारभ्य यावत्सप्तानिवृत्तिकम् ॥ ५२ ॥
शांतः षंढः स्त्री नोकषायषट्कं क्रमेण पुंवेदः ।
कोपाद्येषु द्वौ द्वावेकैकोऽतोऽथ संज्वालः ॥ ५३ ॥
उक्तं च—
पार्यते नोदयो दातुं यत्तत् शांतं निगद्यते ।
संक्रमोदययोर्यन्न तन्निधत्तं मनीनिभिः ॥ ५४ ॥
शक्यते संक्रमे पाके यदुत्कर्षापकर्षयोः ।
चतुर्षु कर्म नो दातुं भण्यते तन्निकांचितम् ॥ ५५ ॥

अनिवृत्तौ ७।१।१।६।१।२।२।२।२ । सूक्ष्मे १ । शांते १ ।
पिंडिताः सप्तभिः सह २८ ।

ताः समुदिताः प्राह—
शांताः क्रमेण सप्ताष्ट नव पंचदश क्रमात् ।
षोडशाष्टादश ज्ञेया विंशतिर्द्व्युत्तरा च सा ॥ ५६ ॥
चतुर्भिः पंचभिः षड्भिः सहिता साऽनिवृत्तिके ।
सप्तभिः सहिता सूक्ष्मे शान्ते साष्टभिरन्विता ॥ ५७ ॥

७।८।९।१५।१६।१८।२०।२२।२४।२५।२६ । सूक्ष्मे २७ ।
शान्ते २८ ।

मिथ्यात्वमथ सम्यक्त्वं मिश्रमाद्याः क्रुधादयः ।
चतुर्षु संयताद्येषु क्षीयंते सप्त कुत्रचित् ॥ ५८ ॥
स्त्यानगृद्धित्रयं तिर्यग्द्वितयं नारकद्वयम् ।
आतपस्थावरद्वन्द्वमाद्यं जातिचतुष्टयम् ॥ ५९ ॥

सूक्ष्मसाधारणोद्योताः षोडशेता[1] निवृत्तिके ।
संख्यातव्यतमे भागे यांति प्रकृतयः क्षयम् ॥ ६० ॥
तिर्यग्द्वयादयः सद्भिस्तिर्यग्गतिगता मताः ।
श्वभ्रद्वयादयो जैनैः श्वभ्रीतिगताः पुनः ॥ ६१ ॥
अष्टौ कोपादयो मध्याः क्षिप्यंतेऽतोनपुंसकम् ।
स्त्रीवेदः क्रमतः षट्कं ततो हास्यादिगोचरम् ॥ ६२ ॥
पौंस्नं पौंस्ने विनिक्षिप्य क्रोधः क्रोधे परे परः ।
माया ततोऽथ मायायां सूक्ष्मे लोभो निकृत्यते ॥ ६३ ॥
८।१।१।६।२।१।१।१।१ ।
द्वे निद्राप्रचले क्षीणे प्रथमेंऽत्ये चतुर्दश ।
क्षणे ज्ञानांतरायस्था दश दृष्टिचतुष्टयम् । २।१४ ॥ ६४ ॥
जीवेतरविपाकानां द्वासप्ततिमयोगकः ।
उपांतिमे क्षणे हंति चरमे तु त्रयोदश ॥ ६५ ॥
स्वरद्वयमनादेयमयशोऽपूर्णदुर्भगौ ।
नभोगतिद्वयं वेद्यमेकमुच्छ्वासनीचके ॥ ६६ ॥
जीवपाकाः स्युरेत्यामा नाम्नोऽन्याः पुद्गलोदयाः ।
एकोनषष्टिसंख्याना दक्षैः प्रकृतयः स्मृताः । १२।५९ ॥६७॥
कायबंधनसंघाताः प्रत्येकं पंचकप्रमाः ।
निर्माणगंधयोर्युग्मं षट्कं संहतिगोचरम् ॥ ६८ ॥
प्रत्येकागुरुलघ्वाह्वे परघातोपघातके ।
एकोनषष्टिरेषात्र विज्ञेया पुद्गलोदया । ५९।॥ ६९ ॥

---

१ गता इत्यर्थः ।

सह देवानुपूर्व्यैता मिलिताः क्षेत्रपाकया ।
ज्ञेया सप्तप्तिः संति सर्वाः प्रकृतयः स्फुटम् ।। ७० ।।

मिलिताः ७२ ।

वेद्यमेकतरं स्थूलं नरायुर्नृद्वयं त्रसम् ।
यशः पर्याप्तमादेयं उच्चं पंचाक्षस्वर्भगे ।। ७१ ।।
हत्वा तीर्थकृता सार्द्धं तीर्थकारी त्रयोदश ।
इतरः केवली याति द्वादशैव शिवास्पदम् ।। ७२ ।।

कार्यक्षयक्रममाह—

श्वभ्रदेवतिर्यगायुर्भिर्विना मिथ्यादृष्टौ—०,१४५,३ । तीर्थकराहारकद्वयहीनाः सासने—०,१४२,६ । आहारकद्विकेन सह मिश्रे—०,१४४,४ । तीर्थकरेण सहाविरते—७,१४५,३ । देशे—७,१४५,३ । प्रमत्ते—७,१४५,३ । अप्रमत्ते—७,१४५,३ । अपूर्वे—०,१३८,१० ।

अनिवृत्तेर्नवसु भागेषु—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १६ | ८ | १ | १ | ६ | १ | १ | १ | ५ |
| १३२ | १२२ | ११४ | ११३ | ११२ | १०६ | १०५ | १०४ | १०३ |
| १० | २६ | ३४ | ३५ | ३६ | ४२ | ४३ | ४४ | ४५ |

सूक्ष्मे—२,१०२,४७ । शांते । क्षीणे क्षणद्वये—१४,९९,४९ । सयोगे—०,८५,६३ । अयोगे समयद्वये—७२,८५,६३ । १३,१३,१३५ । सिद्धे—०,०,१४८ ।

रत्नत्रयफलं प्राप्ता निर्बाधं कर्मवर्जिताः ।
निर्विशंति सुखं सिद्धास्त्रिलोकशिखरस्थिताः ।। ७३ ।।

अष्टचत्वारिंशतं कर्मभेदा-
नित्थं हत्वा ध्यानतो निर्वृता ये ।

स्वस्थानंतामेयसौख्याब्धिमग्ना-
स्ते नः सद्यः सिद्धये संतु सिद्धाः ॥ ७४ ॥
यस्मात्सर्वं कृत्रिमं नाशि दृष्टं
संत्यज्यैकं[1] पावनं सिद्धिलाभम् ।
तस्मादन्यत्सद्भिरत्यस्य[2] कार्यं
कार्यो यत्नः सर्वदा सिद्धिलब्ध्यै ॥ ७५ ॥
कल्मषाष्टकमपास्य सर्वथा
ये गुणाष्टकमवापुरूर्जितम् ।
जातिमृत्युभवदुःखवर्जिता-
स्ते वसंतु मम निर्वृता हृदि ॥ ७६ ॥
[3]दृष्टिवादमकराकरादिदं
प्राभृतैकलवरत्नमुद्धृतम् ।
ज्ञानदर्शनचरित्रबृंहकं
गृह्यतां शिवनिवासकांक्षिभिः ॥ ७७ ॥
बंधं पाकं कर्मणां सत्त्वमेत-
द्वक्तुं शक्तं दृष्टिवादप्रणीतम् ।
शास्त्रं ज्ञात्वाऽभ्यस्यते येन नित्यं
सम्यक् तेन ज्ञायते कर्मतत्त्वम् ॥ ७८ ॥
कर्मबंधगुणजीवमार्गणा-
स्थानयोजनपरायणोऽस्ति यः ।
सत्तपोदलितकर्मसंहतिः
सोऽस्तु तेऽमितगतिः शिवास्पदम् ॥ ७९ ॥

इति श्रीमदमितगत्याचार्यवर्यप्रणीते पंचसंग्रहे सप्ततिः समाप्ता ।

---

१ त्यक्त्वा । २ त्यक्त्वा । ३ दृष्टिवादो द्वादशांगः स एव मकराकरः समुद्रस्तस्मात् ।

नत्वा जिनेश्वरं वीरं बंधस्वामित्वसूदनम् ।
वक्ष्याम्योघविशेषाभ्यां बंधस्वामित्वसंभवम् ॥ १ ॥
गुणस्थानं प्रति बंधः कथ्यते—
सप्तदशैकालीढे शते ततः सप्तर्ति चतुर्युक्ताम् ।
सप्ततिमथ सप्तयुतां सप्तत्यग्रे क्रमात्षष्ठी ॥ २ ॥
एकविहीनां षष्टिं प्रकृतीः सप्तादिमा निबध्नंति ।
षष्टिं द्विचतुर्न्यूनां षड्विंशतिमष्टमस्तस्मात् ॥ ३ ॥
विंशती द्व्येकसंयुक्ते तां ते चैकद्विवर्जिते ।
नवमः पंचकेंशानां सूक्ष्मः सप्तदशैव ताः ॥ ४ ॥
तस्मादेकं त्रयः सातमयोगो बंधवर्जितः ।
विंशतं शतमोघेन बंधप्रकृतयो मताः ॥ ५ ॥

सम्यक्त्वसम्यङ्मिथ्यात्वैकगंधस्पर्शसप्तकरसचतुष्कवर्णचतुष्टयबंधनपंचकसंघातपंचकलक्षणामष्टाविंशतिं वर्जयित्वा शेषा बंधप्रकृतयः १२० । अबंधाः २८ ।

तीर्थंकराहारकद्वये सम्यक्त्वसंयमाभ्यां बध्येते, यस्मात्तस्मात्ताभ्यां विना मिथ्यादृष्टौ—१६,११७ । सासने—२५, १०१ । नरसुरायुर्भ्यां विना मिश्रे—०,७४ । नरसुरायुस्तीर्थंकरैः सहासंयते—१०,७७ । पंचमे—४,६४ । प्रमत्ते—६,६३ । आहारकद्विकेन सहाप्रमत्ते—१,५९ । अपूर्वे सप्तसु भागेषु—२,५८।०,५६।०,५६।०,५६।०,५६।३०,५६।४,२६ । नवमे पंचभागेषु—१,२२।१,२१।१,२०।१,१९।१,१८। सूक्ष्मादिषु—१६,१७।०,१।०,१।१,१।०,० ।

बंधविच्छेदः कथ्यते—

आद्ये षोडश बंधा द्वितीयके पंचविंशतिस्तुर्ये ।
दश पंचमे चतस्रः षट् षष्ठे सप्तमे चैका ॥ ६ ॥
द्वे त्रिंशच्चतस्रोऽपूर्वे नवमे क्षणेषु चैकैकाः ।
पंचसु विच्छिद्यंते षोडश सूक्ष्मे जिने सातम् ॥ ७ ॥
आद्यं जातिचतुष्कं श्वभ्रत्रिदशायुषी सुरद्वन्द्वम् ।
सूक्ष्मस्थावरसाधारणातपापूर्णनारकयुगानि ॥ ८ ॥
वैक्रियिकाहारकयोर्युग्मे चैकोनविंशतिं हित्वा ।
शतमेकोतरमन्याः प्रकृतीः स्वीकुर्वते श्वाभ्राः ॥ ९ ॥
आद्यस्तीर्थकृतोना हुंडासंप्राप्तषंढमिथ्यात्वैः ।
सासादनो विहीनः सप्ततिमथ मिश्रकः श्वाभ्रः ॥ १० ॥
त्यक्त्वा मर्त्यायुषा युक्तामोघोक्तां पंचविंशतिम् ।
मिश्रे षण्णवतेर्ज्ञेया सप्ततिः सासने स्थितेः ॥ ११ ॥
निर्व्रतसम्यग्दृष्टिर्मर्त्यायुस्तीर्थकृत्वयुक्तां ताम् ।
सप्तमनरके हीनं नरायुषा शतमुपादत्ते ॥ १२ ॥
मर्त्यद्वितयोच्चोनं मिथ्यादृष्टिस्तदत्र बध्नाति ।
मिथ्यात्वतिर्यगायुर्हुंडास्यां प्राप्तषंढोनम् ॥ १३ ॥
बध्नाति सासनाख्यः सासादनपंचविंशतिं त्यक्त्वा ।
तिर्यग्जीवितहीनां मर्त्यद्वयगोत्रसंयुक्ताम् ॥ १४ ॥
मिश्राव्रतसद्दृष्टी बध्नीतः सप्तमे स्फुटं श्वभ्रे ।
श्वभ्रगतिर्निर्णीता विज्ञातव्या पराप्येवम् ॥ १५ ॥

ओघेन नरके बंधप्रकृतयः–१०१,९९.। मिथ्यादृष्टौ–१००,२० । सासने–९६,२४ । मिश्रे ७० । निर्व्रते ७२ । चतुर्थपंचमषष्ठश्वभ्रेषु चतुर्थगुणे तीर्थकृता विना. ७१ ।

पृथिवीषट्कं बंधप्रकृतिशतां नरायुषा हीनमोघेन सप्तमे नरके ९९ । मिथ्यादृष्टौ ९६ । सासने ९१ । मिश्रे ७० । निर्व्रते ७० ।

एवं नरकगतिः समाप्ता ।

---

प्रकृती रहितास्तीर्थकर्तृत्वाहारकद्विकैः ।
तिर्यंचो गृह्णते सर्वाः सामान्येन विसंशयम् । ११७ ॥ १६ ॥
तिर्यञ्चस्तास्तिरश्च्योपि पर्याप्ता वामदृष्टयः ।
बध्नंति प्रकृतीः सर्वाः सासनाः षोडशोज्झिताः ॥ १७ ॥
मिथ्यादृशः ११७,३ । सासनः १०१ ।
मर्त्यदेवायुषी मर्त्यद्वयमौदारिकद्वयम् ।
पंचविंशतिमोघोक्तां विमुच्याद्यां च संहतिम् ॥ १८ ॥
एकोनसप्ततिं मिश्रा शेषाः स्वीकुर्वते ततः ।
सप्ततिं गृह्णते युक्ता निर्व्रतास्ताः सुरायुषा ॥ १९ ॥
मिश्राः ६९,३२ । निर्व्रताः ७० ।
तिर्यंचो गृह्णते हीना द्वितीयैस्ताः क्रुधादिभिः ।
एकं स्त्रीपुरुषाः पूर्णाः पंचाक्षा देशसंयताः ॥ २० ॥
मुक्त्वा वैक्रियिकं षट्कं नारकत्रिदशायुषी ।
स्वीकुर्वन्त्योघतोऽपूर्णाः शतं शेषं नवोत्तरम् । १०९ ॥ २१ ॥

इति तिर्यग्गतिः समाप्ताः ।

---

प्रथमाः पंच बध्नंति तिर्यग्वत्प्रकृतीर्नराः ।
चतुर्थाः पंचमास्तत्र परं तीर्थकराधिका ॥ २२ ॥
शतं नवोत्तरं मर्त्यास्तास्तिर्यग्वदपूर्णकाः ।
समर्जन्ति प्रमत्ताद्याः प्रकृतीरौघिकी स्फुटा ॥ २३ ॥

प्रथमाः मिथ्यादृष्ट्यादयः पंच ११७ । १०१ । ६९।७१। ६७ । प्रमत्ताद्याः सर्वे ६३।५९।५८,५६,२६।२२....१८। १७।०१ । अपूर्णा मनुष्याः १०९ ।

इति मनुष्यगतिः समाप्ता ।

---

सूक्ष्मं वैक्रियिकं षट्कं साधारणमपूर्णकम् ।
आहारकद्वयं द्वन्द्वं नारकत्रिदशायुषोः ॥ २४ ॥
विकलत्रितयं मुक्त्वा षोडशप्रकृतीरिमाः ।
अपराः गृह्णते देवाश्चतुर्भिः सहितं शतम् ॥ २५ ॥
ओघेन देवाः १०४ ।
विना तीर्थकृता शेषं मिथ्यादृक् त्र्युत्तरं शतम् ।
एकेन्द्रियमसंप्राप्तं मिथ्यात्वं हुंडमातपम् ॥ २६ ॥
षंढकं स्थावरं सप्त त्यक्त्वा षण्णवतिः पराः ।
प्रकृतीः सासनः सर्वाः स्वीकरोति विसंशयम् ॥ २७ ॥
मिथ्यादृष्टिः १०३ । सासनः ९६ ।
हित्वा मर्त्यायुषा युक्तामोघोक्तां पंचविंशतिम् ।
एताभ्यो गृह्णते मिश्राः सप्तति प्रकृतीः पराः । ७० ॥ २८ ॥
मर्त्यायुस्तीर्थकर्तृत्वयुक्तां द्वासप्तति ततः ।
प्रकृतीः परिगृह्णाति सम्यग्दृष्टिरसंयतः । ७२ ॥ २९ ॥
प्रथमे गृह्णते सर्वे निकायत्रितये सुराः ।
चतुर्निकायजाः देव्यः स्थिता गुणचतुष्टये ॥ ३० ॥
प्रकृतीस्त्रिदशौघोक्तास्तीर्थकर्तृत्ववर्जिताः ।
त्रैदशीरौघिकीः सर्वाः सौधर्मैशानकल्पगाः ॥ ३१ ॥

भावनादिष्वोघेन १०३ । मिथ्यादृगादिषु चतुर्षु १०३।

९६।७०।७० । सौधर्मैशानकल्पजेष्वोघेन १०४ । मिथ्यादृ-
ष्ट्यादिषु १०३।९६।७०।७२ ।

आतापस्थावरैकाक्षैरौघिकीर्गृह्णते विना ।
पराः सनत्कुमाराद्याः सहस्रारावसानगाः । १०१ ॥ ३२ ॥

एतास्तीर्थकृता हीनाः स्वीकुर्वंति कुदृष्टयः ।
हुंडासंप्राप्तमिथ्यात्वषंढोना भ्रष्टदृष्टयः ॥ ३३ ॥

१०० । ९६ ।

ता मर्त्यायुर्युतां हित्वा मिश्रकाः पंचविंशतिम् ।
बध्नंति समनुष्यायुस्तीर्थकृत्वाप्तसंयताः ॥ ३४ ॥

७२ । ७० ।

तिर्यग्द्वितयमेकाक्षं तिर्यग्जीवितमातपः ।
उद्योतः स्थावरं चेति मुक्त्वा प्रकृतिसप्तकम् ॥ ३५ ॥

अपराः प्रकृतीर्देवाः स्वीकुर्वंत्यानतादिषु ।
अंत्यग्रैवेयकांतेषु देवौघप्रतिपादिताः ॥ ३६ ॥

आनतादिस्वोघेन ९७ ।

हीनास्तीर्थकृता मिथ्यादृष्टयः सासनाः पुनः ।
अंत्यग्रैवेयकांतेषु देवौघप्रतिपादिताः ॥ ३७ ॥

आनतादिस्वोघेन ९७ ।

हीनास्तीर्थकृता मिथ्यादृष्टयः सासनाः पुनः ।
रहिताः षंढमिथ्यात्वहुंडासंप्राप्तकैरिमाः ॥ ३८ ॥

९६ । ९२ ।

त्यक्त्वा मर्त्यायुषा युक्तामोघोक्तां पंचविंशतिम् ।
मिश्रास्तिर्यग्द्वयोद्योतातिर्यगायुरपाकृताम् । ७० ॥ ३९ ॥

सतीर्थकृन्नरायुष्कास्ताः स्वीकुर्वन्ति निर्व्रताः ।
सर्वार्थसिद्धिपर्यन्तास्ता एवोर्द्ध्वं व्यवस्थिताः ॥ ४० ॥

निर्व्रताः ७२ । उपरिष्टात्सर्वार्थसिद्धिपर्यन्ता नवानुत्तराद्याः ७२ ।

इति देवगतिः समाप्ता ।

षट्कं वैक्रियिकं तीर्थकृत्त्वं श्वभ्रसुरायुषी ।
आहारकद्वयं चेति विमुच्यैकादश स्फुटम् ॥ ४१ ॥
शतं नवोत्तरं शेषा एकाक्षविकलेन्द्रियाः ।
सामान्येन निबध्नंति घोराज्ञानतमोवृताः । १०९ ॥ ४२ ॥
श्वभ्रायुः श्वभ्रयुग्मोनास्ततः संत्यज्य षोडश ।
बध्नंति सासनाः शेषाः पंचाक्षास्त्वौघिकीः पुनः ॥ ४३ ॥
मिथ्यादृशः १०९,१३ । सासनाः ९६।१२० ।
यावच्छरीरपर्याप्तिमेकाक्षविकलोद्भवाः ।
सासना न प्रपद्यंते तावत्तिर्यङ्नरायुषी ॥ ४४ ॥
न बध्नंति यतस्ताभ्यां ततस्तेषु विना मताः ।
चतुर्नवतिरन्येषामभिप्रायेण बंधने । युग्मम् ॥ ४५ ॥
९४ ।

इतीन्द्रियमार्गणा समाप्ता ।

बध्नंत्येकाक्षवज्जीवा धरांभ अंथ वा ९४ ।[1]
नृद्वयोच्चनरायूंषि तेजः पवनकायिकाः ।
हित्वैकाक्षगताः शेषा गृह्णंत्योघगतास्त्रसाः ॥ ४६ ॥

तेजोवातकायिका मिथ्यादृशः १०५ । ओघगतास्त्रसकायिकाः १२० ।

कायमार्गणा समाप्ता ।

१ धरांभोवृक्षकायिकाः ।

योगेष्वोघगतो भंगो वाङ्मानसचतुष्कयोः ।
भवत्यौदारिके योगे भंगो मर्त्यौघसंभवः ॥ ४७ ॥

औदारिके ११७।१०१।६९।७१ ।

उपर्योघः—

सुरश्वभ्रयुषी श्वभ्रद्विकमाहारकद्विकम् ।
विहायौदारिके मिश्रे स्वीकुर्वन्त्योघतः पराः ॥ ४८ ॥

ओघेनौदारिके मिश्रे ११४ ।

देववैक्रियिकद्वन्द्वे हित्वा तीर्थकृता समम् ।
शतं नवाधिकं ताभ्यो गृह्णते वामदृष्टयः । १०९ ॥ ४९ ॥
श्वभ्रायुः श्वभ्रयुग्माभ्यामूनाः संत्यज्य षोडश ।
तिर्यङ्मर्त्यायुषी ताभ्यः सासना गृह्णते पराः । ९४ ॥ ५० ॥
मुक्त्वा निस्तिर्यगायुष्कामेताभ्यः पंचविंशतिम् ।
देववैक्रियिकद्वन्द्वतीर्थकृत्सहिताः पराः ॥ ५१ ॥
पंचसप्ततिसंख्यानाः परिगृह्णंत्यसंयताः ।
सयोगः सातमेवैकं मिश्रकौदारिके स्थितः ॥ ५२ ॥

क्रमेण ७५ । १ ।

योगवैक्रियिके भंगः सामान्यस्त्रिदशोदितः ।
तिर्यङ्मर्त्यायुषी हित्वा तदीये मिश्रके पराः ॥ ५३ ॥

ओघेन वैक्रियिके १०४ । मिथ्यादृष्ट्यादिषु १०३।९६।७०।७२ । ओघेन वैक्रियिकमिश्रे १०२ ।

हीनास्तीर्थकरेणाद्ये स्थावरैरेकेन्द्रियातपैः ।
हुंडासंप्राप्तमिथ्यात्वषंढैरपि च सासने ॥ ५४ ॥

मिथ्यादृष्टौ १०१ । सासने ९४ ।

पंचविंशतिमत्यस्य तिर्यगायुर्विवर्जिता ।
युक्तास्तीर्थकरेणान्या निर्व्रताः परिगृण्हते ॥ ५५ ॥
आहारकद्वये योगे षष्ठवद्गृह्णते विना ।
आहारकद्वयश्वभ्राद्वितयायुश्चतुष्टयैः ॥ ५६ ॥
कार्मणे गृण्हते योगे शेषा मिथ्यादृशस्त्विमाः ।
देववैक्रियिकद्वन्द्वतीर्थकर्तृत्ववर्जिताः ॥ ५७ ॥

आहारकाहारकमिश्रद्वये ६३ । ओघेन कार्मणे योगे ११२ । मिथ्यादृशः १०७ ।

श्वभ्रायुर्नारकद्वन्द्वत्यक्ताः संत्यज्य षोडश ।
एताभ्यः सासना योगे गृह्णते कार्मणे पराः । ९४ ॥५८॥
नृतिर्यगायुषी हित्वा पंचविंशतिमव्रते ।
सुरवैक्रियिकद्वन्द्वतीर्थकर्तृत्वसंयुताः । ७५ ॥ ५९ ॥
सयोगा गृण्हते सातं प्रतरे लोकपूरणे ।
यौगिकी मार्गणा ख्याता वेदी सा कथ्यतेऽधुना ॥ ६० ॥

इति योगमार्गणा समाप्ता ।

---

एकाग्रविंशतिर्यावद्बंधकोऽस्त्यनिवृत्तिकः ।
ओघो वेदत्रये तावत्संत्यवेदास्ततः परे ॥ ६१ ॥

इति वेदमार्गणा समाप्ता ।

---

ओघोदितः कषायेषु बंधो मिथ्यादृगादिषु ।
नवमं दशमं यावन्निःकषायेषु चेरितः ॥ ६२ ॥

ओघेन कषायचतुष्काणां १२० । विशेषतो मिथ्यादृष्ट्यादीनामेकविंशतिविंशत्येकोनविंशतिबंधकानिवृत्तिपर्यन्तानां

सकषायचतुष्काणामोघभंगः, ततः सलोभकषायाणां सूक्ष्मसांपरायणामोघः, ततोऽकषायाणां शांतक्षीणसयोगानामोघः ।

इति कषायमार्गणा ।

अज्ञानं ज्ञानमप्यस्ति गुणे यद्यत्र तत्त्वतः ।
तत्तत्र विदुषा बुद्ध्वा बंधस्यौघो नियोज्यताम् ॥ ६३ ॥

तत्रौघेनाऽज्ञानत्रये ११७ । मिथ्यादृष्टौ ११७ । सासने १०१ । ततोऽसंयतादीनां मत्यादिज्ञानत्रये नवानामोघभंगः, ततो मनःपर्यये प्रमत्तादीनां सप्तानामोघः, ततः केवले सयोगायोगयोरोघः ।

इति ज्ञानमार्गणा ।

ओघः सामायिके वृत्ते छेदोपस्थापनेऽपि च ।
प्रमत्तादिचतुष्केऽस्ति परिहारेऽपि चाद्ययोः ॥ ६४ ॥
सूक्ष्मे सूक्ष्मकषायोऽसौ यथाख्याते चतुर्ष्वतः ।
देशे देशचरित्रेऽसौ चतुष्केऽप्यस्त्यसंयमे ॥ ६५ ॥

इति संयममार्गणा ।

चक्षुषोऽचक्षुषो दृष्टावोघो द्वादशके मतः ।
गुणानामव्रतादीनां नवकेऽवधिदर्शने ॥ ६६ ॥
सयोगायोगयोरोघो ज्ञेयः केवलदर्शने ।
मार्गणा दर्शनस्योक्ता लेश्यानां तां वदाम्यतः ॥ ६७ ॥
आद्यलेश्यात्रयालीढा विमुच्याहारकद्वयम् ।
एतास्तीर्थकरेणोनाः स्वीकुर्वन्ति कुदृष्टयः ॥ ६८ ॥

कृष्णनीलकापोतलेश्यासामान्येन ११८ । कुदृष्टयः ११७ ।

सासनाः षोडश त्यक्त्वा मिश्रकाः पंचविंशतिम् ।
देवमर्त्यायुषी चान्याः सप्ततिं चतुरन्विताम् ॥ ६९ ॥
सासनाः १०१ । मिश्राः ७४ ।
तीर्थकृन्नृसुरायुर्भिर्युक्तां बध्नंत्यसंयताः ।
तेजोलेश्या विमुच्यैताः श्वभ्रायुर्विकलत्रयम् ॥ ७० ॥
श्वभ्रद्वयमपर्याप्तं सूक्ष्मं साधारणं पराः ।
हित्वा वामदृशस्तीर्थकर्तृत्वाहारकद्विके ॥ ७१ ॥
असंयताः ७७ । ओघेन तेजोलेश्याः १११ । वामदृशः १०८
एकेन्द्रियमसंप्राप्तं स्थावरं षंढहुंडके ।
मिथ्यात्वमातपं हित्वा परा बध्नंति सासनाः । १०१ ॥ ७२ ॥
औघिकीः परिगृह्णंति प्रकृतीः सकलाः स्फुटम् ।
तेजोलेश्यास्थिताः पंच सम्यङ्मिथ्यादृगादयः ॥ ७३ ॥
७४।७७।६७।६३।५९ ।
श्वभ्रायुर्नारकद्वंद्वसूक्ष्मसाधारणातपान् ।
एकेन्द्रियमपर्याप्तं स्थावरं विकलत्रयम् ॥ ७४ ॥
पद्मलेश्या निरस्यैता द्वादश प्रकृतीः पराः ।
आत्मसात्कुर्वते सर्वाः अष्टोत्तरशतप्रमाः ॥ ७५ ॥
ओघेन पद्मलेश्याः १०८ ।
विहायाहारकद्वन्द्वतीर्थकृत्त्वं कुदृष्टयः ।
सासनाः षंढमिथ्यात्वहुंडासंप्राप्तकैर्विना ॥ ७६ ॥
कुदृष्टयः १०५ । सासनाः १०१ ।
स्वीकुर्वन्त्यौघिकीः पंच मिश्रदृष्टिपुरोगमाः ।
शुक्ललेश्याः प्रबध्नंति स्थावरं नारकद्वयम् ॥ ७७ ॥

तिर्यग्द्वयातपैकाक्षाण्युद्योतं विकलत्रिकम् ।
तिर्यक्श्वभ्रायुषी सूक्ष्मं साधारणमपूर्णकम् ॥ ७८ ॥
षोडशेति परित्यज्य प्रकृतीर्गृण्हते पुनः ।
हित्वा मिथ्यादृशस्तीर्थकारित्वाहारकद्वये ॥ ७९ ॥
असंप्राप्तकमिथ्यात्वषंढहुंडविवार्जिताः ।
सासना गृण्हते शेषाः शुक्ललेश्याव्यवस्थिताः ॥ ८० ॥

ओघेन शुक्ललेश्याः १०४ । मिथ्यादृशः १०१ । सासना ९७ ।

मिश्रास्तिर्यग्द्वयोद्योततिर्यगायुरपाकृताम् ।
हित्वामरनरायुर्भ्यां सहितां पंचविंशतिम् ॥ ८१ ॥
अपरा गृह्णते शेषाः प्रकृतीरव्रताः पुनः ।
तीर्थकृन्नृसुरायुर्भिरोघोक्ता निखिला युताः ॥ ८२ ॥

७४ । अव्रताः ७४ ।

इति लेश्यामार्गणा ।

---

औघिकीर्गृण्हते भव्यास्ता अभव्याः कुदृष्टिगाः ।
ओघो वेदकदृष्टीनां निर्व्रतादिचतुष्टये ॥ ८३ ॥
ओघःक्षायिकदृष्टीनामेकादशगुणाश्रिताम् ।
विबुध्यासंयतादीनां योजनीयो यथागमम् ॥ ८४ ॥
ओघो मर्त्यसुरायुर्भ्यां हीनः शामिकदर्शने ।
बध्नंति नैकमप्यायुर्यतस्तत्र व्यवस्थिताः ॥ ८५ ॥
मुक्त्वा द्वितीयकोऽपादिचतुष्कादिमसंहती ।
नृद्वयौदारिकद्वन्द्वे शेषा गृण्हंत्यणुव्रताः ॥ ८६ ॥

असंयताः ७५ । अणुव्रताः ६६ ।

हित्वा तृतीयकोपादिचतुष्कं ताः प्रमादिनः ।
शोकस्थिराशुभासातायशोऽरतिविवर्जिताः ॥ ८७ ॥
आहारकद्वयाः शेषाः स्वीकुर्वन्त्यप्रमत्तकाः ।
शान्तान्तेषु परेष्वोघो द्रष्टव्योऽपूर्वकादिषु ॥ ८८ ॥
प्रमत्ताः ६२ । अप्रमत्ताः ५८ ।

इति भव्यसम्यत्क्वमार्गणा ।

---

ओघोक्ताः संज्ञिनां मिथ्यादृष्टियातास्त्वसंज्ञिनाम् ।
एतेषां सासनस्थानां ज्ञातव्याः सासनस्थिताः ॥ ८९ ॥

इति संज्ञिमार्गणा ।

---

अस्त्याहारकेष्वोघः कर्मप्रकृतिबंधने ।
ज्ञेयः कार्मणयोगस्थो अंगोऽनाहारकेषु तु ॥ ९० ॥

इति आहारकमार्गणा ।

---

## ग्रंथकर्तुः प्रशस्तिः ।



श्रीमाथुराणामनघद्युतीनां
संघोऽभवद्वृत्तविभूषितानाम् ।
हारो मणीनामिव तापहारी
सूत्रानुसारी शशिरश्मिशुभ्रः ॥ १ ॥

माधवसेनगणी गणनीयः
शुद्धतमोऽजनि तत्र जनीयः ।
भूयसि सत्त्ववतीव शशांकः
श्रीमति सिंधुपतावकलंकः ॥ २ ॥

शिष्यस्तस्य महात्मनोऽमितगतिर्मोक्षार्थिनामग्रणी-
रेतच्छास्त्रमशेषकर्मसमितिप्रख्यापनायाकृत ।
वीरस्येव जिनेश्वरस्य गणभृद्भव्योपकारोद्यतो
दुर्वारस्मरदन्तिदारणहरिः श्रीगौतमोऽनुत्तमः ॥ ३ ॥

यदत्र सिद्धांतविरोधि बद्धं,
ग्राह्यं निराकृत्य तदेतदार्यैः ।
गृण्हंति लोका ह्युपकारि यद्वत्,
त्वचं निराकृत्य फलं पवित्रम् ॥ ४ ॥

अनश्वरं केवलमर्चनीयं
यावत्स्थिरं तिष्ठति मुक्तपंक्तौ ।

तावद्धरायामिदमत्र शास्त्रं
स्थेयाच्छुभं कर्मनिरासकारि ॥ ५ ॥

त्रिसप्तत्याधिकेऽब्दानां सहस्रे शकविद्विषः ।
मसूतिकापुरे जातमिदं शास्त्रं मनोरमम् ॥ ६ ॥

इत्याचार्यवर्यश्रीमदमितगतिविरचितः पंचसंग्रहः समाप्तः ।

समाप्तोऽयं ग्रन्थः ।